

1875 बेल्लङ्कोण्ड रामरायकवीन्द्रेण 1914

विरचिते ।

# अद्वैतान्यमतखण्डनम्, अद्वैतामृतञ्च ।

# ADVAITA UNNYA MATHA KHANDANAM - SANSKRIT.

AUTHOR :

SRI BELLAMKONDA RAMA RAYA KAVINDRULU.

DIGITALISED BY jan-2011.

Bellamkonda Chakradhar Kumar.Great Grand Son of Sri Rama Raya Kavindrulu.



ADDRESS :

SRI BELLAMKONDA RAMA RAYA KAVINDRA TRUST.

SRI NILAYAM

Do.No:- 12-8-5/5

PRAKASH NAGAR

NARASARAO PET (P o)

PIN – 522 601

GUNTUR (Dt)

ANDHRA PRADESH INDIA.

**CONTACT NO'S : - (+91) 0 9700311109 AND 0 9866400133.**

**NOTE :-** PLEASE TAKE A4 SIZE PRINT PREFARBULE.

# अद्वैतान्यमतखण्डनम्, अद्वैतामृतञ्च ।

श्रीकृष्णाकावेरीमध्यवर्ति गुण्टूरुमण्डलान्तर्गतनरसारावुपेट-
सन्निहितपमिडिपाडुनामकाग्रहारनिवासिना
श्रीनन्दनन्दनचरणारविन्दामन्दनिष्यन्दमरन्दबिन्दुबृन्दविन्दनतुन्दिल-
मिलिन्दायमानमानससरोजातेन भारद्वाजसगोत्रजातेन
निर्मितश्रीकृष्णलीलातरङ्गिणीरुक्मिणीपरिणय-
शरद्रात्रिसमुद्रमथनवेदान्तकौस्तुभादि-
शताधिकग्रन्थजातेन

वेलङ्कोण्ड रामरायकवीन्द्रेण

विरचिते ।

सम्पादकः, प्रकाशकश्च
कविता वेङ्कटसुब्रह्मण्यशास्त्री,
नरसारावुपेट ।

१९५५

 [ मूल्यम् १—०—०

# अद्वैतान्यमतखण्डनम्, अद्वैतामृतञ्च ।

रचयिता

पण्डित श्री वेल्लङ्कोण्ड रामरायकवीन्द्रः ।

१९५५



[ मूल्यम् १—०—०

श्रीहयग्रीवाय नमः ।

# अद्वैतान्यमतखण्डनम् ।

## निरीश्वरसाङ्ख्यमतखण्डनम् ।

श्लो॥ नत्वा श्रीमद्धयग्रीवचरणाम्भोरुहद्वयम् ।
अद्वैतान्यमतानां तु खण्डनं क्रियते मया ॥

तावत्साङ्ख्यं द्विविधं- सेश्वरं, निरीश्वरं चेति । सेश्वर साङ्ख्यं मया वेदान्तसंग्रहे ग्रन्थे दर्शितम् । तद्धि वेदान्तमतमेव यद्देवहूतिसुत-भगवत्कपिलाचार्यप्रतिपादितम् ।

निरीश्वरसाङ्ख्यं तु कपिलयोगिना प्रोक्तं केनचिद्वेदविरुद्धत्वा-त्खण्डनीयमेव तत् । तथाहि—

श्लो॥ 'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयस्सप्त ।
षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥'

इति तदीयश्लोकः । तत्र जगज्जन्मादिकारणत्वं ते प्रकृतेः प्रतिपादयन्ति । तदयुक्तम्—प्रकृतेर्जडत्वात्सृष्टेस्तदैक्षतेतीक्षणपूर्वकत्व-श्रवणाच्च न सृष्ट्यादिकर्तृत्वं प्रकृतेः । तथा प्रकृतिरिति महानिति च वेदे न क्वापि श्रूयत इत्यवैदिकमेव तद्द्वयम् । यदि तु प्रकृतिर्मायेति महत्तत्त्वं बुद्धिरिति चोच्यते तर्हि दोषाभावेऽपि केवलमायाया जडत्वा-त्सृष्ट्याद्यनुपपत्तिरेव । यदि पुरुषाधिष्ठितायास्तस्यास्तद्धेतुत्वमित्युच्यते तर्हि स्वसिद्धान्तविरोधः- त्वन्मते पुरुषस्योदासीनत्वात् मायाधिष्ठान-

क्रियाकर्तुरौदासीन्यायोगात् । पुरुषाधिष्ठितमायाया इव मायाधिष्ठातृ-पुरुषस्यापि सृष्ट्यादिकर्तृत्वापातात्सति च तत्कर्तृत्वे पुरुषोपि जगज्जन्मादिहेतुर्भवत्येवेति कृत्वा कथं पुरुषस्याप्रकृतित्वम्? प्रकृतित्वं नाम हेतुत्वं हि- 'जनिकर्तुः प्रकृति'रिति पाणिनिसूत्रात्, 'प्रकृतिः पञ्चभूतेषु प्रधाने मूलकारणे' इति कोशाच्च । भवतोप्यभिमतमेवेदं प्रकृतिः कारणं विकृतिः कार्यमिति । तस्मान्मायावी पुरुषएव प्रकृतिः, न तु पुरुषादन्यत्तत्त्वान्तरं प्रकृतिरिति सुस्थम् ।

अथ 'न प्रकृतिर्न विकृतिः पुरुष' इति विशिष्टपुरुषशब्देन किं जीवस्य ग्रहणम्? यद्वेश्वरस्य? अथ वा ब्रह्मणः? न जीवस्य- तस्य जगज्जन्माद्यहेतुत्वेनाप्रकृतित्वेपि, 'न जायत' इति श्रुत्या अविकृतित्वेपि, 'कर्ता भोक्ता विज्ञाना'त्मेति श्रुत्या औदासीन्याभावात् । नापीश्वरस्य— तस्य प्रकृतित्वात् । अथ यदि पारमार्थिकं रूपं गृह्यते चैतन्यमात्रं, तर्हि जीवेश्वरयोस्सर्वसम्मतयोस्तत्त्वेषु गणनाभावात् गणिततत्त्वैर्जीवेश्वरग्रहणायोगाच्च तव मतमवद्यमेव ।

यद्यहङ्कारतत्त्वेन जीवस्य ग्रहणं, ईश्वरस्तु नास्त्येवेत्युच्यते तत्तुच्छम्—अहङ्कारनाशसाक्षिणो जीवस्याहङ्कारत्वायोगात्, जगत्सृष्ट्यादिहेतोरीश्वरस्याभावे जगदभावात्, सत्यपि जगति व्यवस्थाऽसिद्धेश्च ।

अथ यदि पुरुषशब्देन साक्षिग्रहणं, अहङ्कारशब्देन जीवग्रहणं, प्रकृतिशब्देन मायाग्रहणं, ईश्वरब्रह्मणी तु पुरुषादनन्ये एवेत्युच्यते तर्हि सेश्वरसाङ्ख्यमेव तत् ।

इति निरीश्वरसाङ्ख्यमतखण्डनं नाम प्रथमप्रकरणम् ।

# द्वैतमतखण्डनम् ।



अस्तीश्वरः, जीवस्तु ततोन्यः, न तयोरद्वैतमिति योगिनो द्वैतिनश्च, तदपि मन्दम्—तथाहि, किं जीवेश्वरयोरौपाधिको भेदो युष्माकमिष्टः ? उत तात्त्विकः ? आद्योऽस्माकमपीष्ट एव । द्वितीयस्त्वयुक्तः- अन्तःकरणावच्छिन्नं चैतन्यं जीवः; मायावच्छिन्नमीश्वर इति स्थिते अवच्छेदकान्तःकरणमाययोर्भेदेपि अवच्छिन्नचैतन्याभेदात् । घटावच्छिन्नस्य मठावच्छिन्नस्याप्याकाशस्य न हि स्वतो भेदः, किं तु घटमठरूपोपाधिवशादेव । नापि दर्पणप्रतिफलितस्य जलप्रतिफलितस्य च सूर्यस्य भेदः, किंतु दर्पणजलयोरेवेति ।

अथ यद्युच्यते सर्वज्ञात्सर्वशक्तेरीश्वरात् किञ्चिद्ज्ञस्याल्पशक्तेर्जीवस्य भेद इति, तदप्ययुक्तम्—सर्वज्ञत्वादिविशेषणांशे भेदेपि विशेष्यांशे अभेदात् । नच घटिनः पुरुषात्पटिनः पुरुषस्येव विशेष्यांशेपि भेद एवेति वाच्यं, तत्र पुरुषयोर्द्वयोर्विशेषणांशं विनापि रूपादिगतस्वाभाविकभेदसद्भावात् । प्रकृते तु जीवेश्वरयोर्न स्वरूपभेदः- स्वरूपस्य चैतन्यस्यैकरूपत्वात् । नहि तद्देशतत्कालदृष्टाद्देवदत्तादेतद्देशैतत्कालदृष्टस्य देवदत्तस्य भेदः । नच राजपुरुषराज्ञोरिव नियम्यनियामकयोर्जीवेश्वरयोर्भेद इति वाच्यं, जीवेश्वरयोर्नियम्यनियामकत्वस्य चौपाधिकत्वेनातात्त्विकत्वात् । किं बहुना यदि जीवेश्वरयोरेको ज्ञानस्वरूपः, अन्यस्तु ज्ञानेतरस्वरूपश्च स्यात्तर्हि तात्त्विको भेदस्स्यात् । नतु तद्युज्यते- 'साक्षी चेता केवलो निर्गुण'श्चेत्यादिशास्त्रेण द्वयोरपि ज्ञानस्वरूपत्वप्रतिपादनात् , द्वयोरपि स्वप्रकाशत्वात् । जीवस्य तावत्स्वप्रकाशत्वं स्वप्ने दृष्टं; सूर्यचन्द्राद्यभावेपि स्वप्ने स्वयमेव सर्वपदार्थावभासकत्वा-

जीवस्य । ईश्वरस्य स्वप्रकाशत्वं तु शास्त्रादिना दृढीकृतं-- इश्वरस्य परोक्षत्वात् । नचैवं परोक्षत्वापरोक्षत्वाभ्यां जीवेश्वरयोर्भेद इति वाच्यं, परोक्षत्वापरोक्षत्वयोरपि जीवेश्वरगतयोरौपाधिकत्वेनातात्त्विकत्वात् । वस्तुतस्तु विश्वतैजसप्राज्ञेभ्यो विलक्षणः कूटस्थ एव जीवः । तस्य चेश्वरत्वमव्याहतमिति जीवेश्वरस्वरूपभूतं चैतन्यं सर्वदा सर्वस्यापि प्रत्यक्षमेव- 'यत्साक्षादपरोक्षाद्ब्र'ह्मेति श्रुतेः, आत्मत्वाच्च चैतन्यस्य । न हि स्वयं स्वस्य कदाप्यप्रत्यक्षस्स्यात्, किं तु भ्रान्ता इमे लोकाः शरीरादिकं जीवत्वेनेश्वरत्वेन चाभिमन्यमानाः जीवः प्रत्यक्षः वैकुण्ठादिलोकस्थो विष्ण्वादिरीश्वरोऽप्रत्यक्ष इति प्रतिपद्यन्ते ।

ननु ईश्वरस्य परोक्षत्वमपरोक्षत्वं चेति द्वयं त्वयैवोक्तमिति स्ववचोव्याघात इति, चेन्मैवम्—अस्मदादयो जीवाः विष्ण्वादय ईश्वरा इति लोकप्रवादानुसारेण मयोक्तमीश्वरस्य परोक्षत्वं; अतो न व्याघात इति । तदेवमस्मदादिशरीरेषूपलभ्यमानं चैतन्यं यथा स्वप्रकाशमन्यावभासकं निर्गुणं साक्षि तथा ब्रह्मविष्ण्वादिशरीरगतमपि । यथा घटेषूपलभ्यमान आकाशो नीरूपो निर्मलस्तथा मठेषूपलभ्यमानोऽपीति कृत्वा न जीवेश्वरयोस्स्वरूपभेदः । एतेन जीवानां परस्परं भेदश्च निराकृतः—उपाधीनां घटानामानन्त्येप्युपहितस्याकाशस्यैकत्वमिव अन्तःकरणोपाधीनामानन्त्येप्युपहितस्य चैतन्यस्यैकत्वात् ।

ननु वेदान्तमतेपि केचित्साक्ष्यानन्त्यमूचुरेवेति चेन्मैवम्—औपाधिकमानन्त्यमिति तदाशयात् । नचैवं चैत्रानुभूतस्य मैत्रेण स्मरणप्रसङ्गः- साक्ष्यैकत्वादिति वाच्यं, अन्तःकरणभेदेन तदप्रसङ्गात्; यदुपहितसाक्षिणो यदनुभवस्तदुपहितस्यैव तत्स्मरणमिति सिद्धान्तात् ।

नचैवं सिद्धस्साक्षिभेद इति वाच्यं, औपाधिकभेदस्यास्माकमिष्टत्वात् । यद्वा साक्षिचैतन्यप्रतिफलनशालिनोन्तःकरणस्य अन्तःकरणप्रतिफलित-चैतन्यस्य वा घटाद्यनुभवस्मरणेन तु केवलस्य साक्षिणः तथाविधान्यन्तःकरणानि प्रतिशरीरं भिन्नान्येवेति न दोषः । नचैवं सुषुप्तावन्तःकरणनाशात्तदानीमनुभूतानन्दस्य प्रबोधे स्मरणानुपपत्तिरिति वाच्यं, तदानीमप्यन्तःकरणस्य सूक्ष्मरूपेण सत्त्वादन्यथा पुनरावृत्त्यनुपपत्तेः मुक्तवत् । सुषुप्तिमुक्त्योरियानेव हि भेदः- मुक्तावन्तःकरणस्य सुतरामभावः, सुषुप्तौ तु निलीयावस्थानमिति । तस्माज्जीवेश्वरब्रह्मपदवाच्यं चैतन्यमेकमेव ।

ननु 'द्वौ सुपर्णौ सयुजौ सखायौ समानवृक्षं परिषस्वजाते । एकस्तयोः पिप्पलमत्ति पक्कमन्यस्त्वनश्नन्नभिचाकसी'तीति श्रुत्या, 'गुहां प्रविष्टा'विति श्रुत्या च 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्वभूता'नीत्यादिस्मृतिभ्यश्च कर्तुर्भोक्तुर्जीवाद्विलक्षण एवाऽकर्ताऽभोक्ता परमेश्वर इति चेन्नैवम्—जीवो न कर्ता, नापि भोक्ता--निर्बिकारश्रुतिविरोधात् । कर्तृत्वभोक्तृत्वयोर्विकारत्वात् सविकारस्य घटादेर्नाशदर्शनेनात्मनोपि नाशप्रसङ्गात् । 'अजो नित्यश्शाश्वत' इत्यादिश्रुतिविरोधाच्च । किंतु जीवोपाधिभूतबुद्धिगतकर्तृत्वभोक्तृत्वयोर्जीवेऽध्यासः । अतः कर्ता भोक्ता बुद्धिरेव । पुंलिङ्गनिर्देशस्तु अहङ्काराभिप्रायेण-- मनोबुद्धिचित्ताहङ्काराणामेकान्तःकरणतत्त्वत्वात् । तथा च द्वौ सुपर्णौ बुद्धिजीवावेव, न तु जीवेश्वरौ । यद्वा जीवकूटस्थौ सुपर्णौ; जीवोनामाहङ्कारतादात्म्याध्यासवान् प्रमाता पुरुषः कर्ता भोक्ता च, कूटस्थस्तु अहङ्काराध्यासाधिष्ठानं चैतन्यं; तदकर्त्रभोक्तृ च

इति। नचैवं प्रमातृकूटस्थयोर्भेद इति वाच्यं, प्रमातुरेव वस्तुतः कूटस्थत्वात्- चैतन्याहङ्कारयोरन्योन्यतादात्म्याध्यासवशात्प्रमातृत्वमात्मनः, तदध्यासाभावे तु कूटस्थत्वमिति सिद्धान्तात्। यदि प्रमातुरन्य आत्मेत्यभ्युपगमः तर्हि सुषुप्तौ प्रमातुरभावात् साक्षिणात्मनानुभूतस्य सुखस्य प्रबोधे प्रमात्रा न स्मर्येत- अन्यानुभूतस्यान्यस्य स्मरणासम्भवात्।

ननु अन्तर्यामिब्राह्मणे 'य आत्मनि तिष्ठ'न्निति श्रूयते जीवान्तरत्वमीश्वरस्य, ततो जीवेश्वरयोर्भेद इति, चेन्मैवमपि—तत्रात्मशब्देन बुद्धेरेव ग्रहणं, न जीवस्य- देहबुद्ध्यादिष्वप्यात्मशब्दप्रयोगदर्शनात्, उपहितस्योपाधेरान्तरत्वं प्रत्यक्षमेव- घटान्तराकाशदर्शनात्। तथा च बुद्धेर्जीवस्योपाधित्वाद्बुद्धेरान्तर एव जीवः; कूटस्थ आत्मेति न जीवेश्वरभेदसिद्धिरन्तर्यामिब्राह्मणात्। परं तु बुद्धिजीवयोरेव भेदसिद्धिः; सास्माकमतीवानुकूला-बुद्धिजीवतादात्म्याध्यासप्रयुक्तबंधस्य बुद्धिजीवविवेकं विना दुर्निवारत्वाद्विचारेण बुद्धिजीवभेदसिद्धौ सर्वसंसारनाशान्मोक्षलाभ इति ज्ञानादेव मोक्ष इत्युक्तसिद्धान्तस्थिरीभाव इति। एतेनान्तर्यामित्वादिकं जीवधर्म एव; नियम्यत्वादिकं तु बुद्धिधर्म इति सिद्धम्। अतोऽन्तर्यामी सर्वावभासकस्सर्वज्ञस्स्वयंप्रकाशश्च जीव एवेश्वर इति न जीवेश्वरयोर्भेदः।

इति द्वैतमतखण्डनं नाम द्वितीयप्रकरणम्।

---

## विशिष्टाद्वैतमतखण्डनम्।

अथ भेदाभेदवादी विशिष्टाद्वैती प्रत्यवतिष्ठते— तत्त्वमस्याद्यद्वैतश्रुतीनां, द्वौ सुपर्णावित्यादिभेदश्रुतीनां च सत्त्वात् सर्वश्रुतिप्रामा-

ण्यादन्यतरश्रुत्यप्रामाण्यस्य दुर्वचत्वाच्च सिद्धं भेदाभेदमतमिति तत्र द्वैताद्वैतश्रुतिसमन्वयो दर्शित एव ।

अथ तन्मतं केवलं खण्ड्यते—तथाहि, विरुद्धयोर्भेदाभेदयोः कथमेकत्र समवायः ? भिन्नत्वविरोधिह्यभिन्नत्वम् । नच व्यवहारतो भिन्नौ वस्तुतस्त्वभिन्नाविति वाच्यं, युष्मत्सिद्धान्तभङ्गप्रसङ्गात् । तद्धय-स्माकं मतम् । नच मनुष्योहं मम शरीरमिति प्रतीतिद्वयवशाच्छारीर-शरीरिणोर्यथा भेदाभेदस्तथा जीवेश्वरयोरिति वाच्यं, शरीरात्मनोर्भेद-ज्ञानस्यैव प्रमात्वेनाभेदज्ञानस्य भ्रमत्वात् । जीवेश्वरयोरभेदज्ञानमपि भ्रम एव भवेत्तद्धयनिष्टं सर्ववेदान्तव्याकोपात् ।

नच 'ईश्वरो जीवकलया प्रविष्टो भगवा'निति स्मृत्या, 'अनेन जीवेनानुप्रविश्य नामरूपे व्याकरवाणि, तत्सृष्ट्वा तदेवानुप्राविश'दिति श्रुत्या च ईश्वरस्य जीवाभेदः, 'ममैवांशो जीवलोको जीवभूतस्सनातन' इति गीतावचनाज्जीवभेदश्च प्रतिपादित इति कृत्वा श्रुतिप्रामाण्याद्भेदा-भेदसिद्धिर्दुरपलापेति वाच्यं, निरंशस्येश्वरस्य अंशित्वकल्पनानौचित्यात् ; घटाकाशो महाकाशस्येव जीव ईश्वरस्यांश इति व्यवहारमात्रेण घटा-काशमहाकाशयोरिव जीवेश्वरयोरंशांशित्वप्रयुक्तभेदासम्भवात् । नहि कोपि घटाकाशं महकाशस्यांशं प्रतिपद्यते, किंत्वाकाशमेव- उपाधेरुप-हितभेदाप्रयोजकत्वात् । तथा ईश्वरचैतन्यस्यान्तःकरणावच्छिन्नत्वमात्रेण जीवत्वादिव्यवहारः । अयं च व्यवहारः न जीवेश्वरयोरंशांशित्वादिभेद-प्रतिपादने क्षमते । अत एव श्रीशङ्करभगवत्पादाचार्या गीताभाष्ये अंश इवांशः कल्पित इव कल्पित इत्यूचुः । किंच यदि जीवश्चैतन्यरूपो न स्यात्तर्हीश्वरांशोपि न स्यात्- ईश्वरस्य चैतन्यरूपत्वाच्चैतन्यं चैकमेवेति कथं जीवेश्वरयोर्भेदाभेदप्रसङ्गः ।

अथ विशिष्टाद्वैतमित्यवैदिकमेव पदम् । वेदे क्वापि तत्पदस्यादर्शनात् । अतोऽप्रमाणमेव तदर्थश्च दुर्निरूप एव । विस्तरेण प्रतिपादितमिदं मया सिद्धान्तबिन्दुव्याख्याने सिद्धान्तसिन्धाविती्होपरम्यते ।

इति विशिष्टाद्वैतमतखण्डनं नाम तृतीयप्रकरणम् ।

---

## तर्कमतखण्डनम् ।



अथ द्वैतमतसहायभूतं तर्कमतं खण्ड्यते—

द्रव्यगुणकर्मसामान्यसमवायविशेषाभावास्सप्त पदार्थाः; पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव द्रव्याणि; आत्मा द्विविधः-- जीव ईश्वरश्चेति; अनित्यज्ञानादिगुणको विभुर्जीवः; स प्रतिशरीरं भिन्नः। नित्यज्ञानादिगुणक ईश्वरएक एव । शब्दस्पर्शादयो ज्ञानेच्छादयश्च गुणाः; गमनादिकं कर्म; नित्यमेकमनेकानुगतं सामान्यं जातिर्घटत्वादिः ; नित्यसम्बन्धस्समवायः अयुतसिद्धवृत्तिः; नित्यद्रव्यवृत्तयो व्यावर्तका विशेषा अनन्ताः; अभावश्चतुर्विधः- प्रागभाव इत्यादि। अज्ञानस्य ज्ञानाभावरूपत्वादभावत्वम् ; अभावादेव भावोत्पत्तिः; सर्वमूर्तद्रव्यसंयोगित्वं विभुत्वं; पुरीतद्व्यतिरिक्तात्ममनस्संयोगादेव ज्ञानोत्पत्तिः; मनोवृत्तिरेव ज्ञानं; तर्कशास्त्राध्ययनाद्दुःखध्वंसरूपमोक्षलाभ इति तार्किकाः प्रतिपेदिरे ।

तत्रोच्यते—अभाव इति कश्चन पदार्थोऽस्ति वा, न वा ? आद्ये- अभावस्य भाव इति व्याघातः । द्वितीये- अविद्यमानस्याभावस्य कथं पदार्थेषु गणना । अन्यथा शशशृङ्गादीनामपि गणनीयत्वापत्तेः । द्रव्याणामनित्यत्वान्नित्यद्रव्यवृत्तिविशेषाश्शशशृङ्गप्राया एव । गुण-

गुणिनोस्तादात्म्यस्यैव सम्बन्धत्वान्नास्ति समवाय इति कश्चन पदार्थः— ब्रह्मभिन्नस्यानित्यत्वेन नित्यसम्बन्धस्याभावात् । । नित्यमेकमनेकानुगतं हि सामान्यं, नित्यत्वैकत्वसर्वगतत्वानां ब्रह्मधर्माणामन्यत्रासम्भवान्नित्यत्वादिघटितं सामान्यं नास्त्येव; यथा घटा अनित्यास्तथा घटत्वमप्यनित्यमेव- प्रलये सर्वघटनाशे घटत्वस्यापि नाशात् । नहि स्वाश्रयं घटं विना घटत्वं वर्तते । तथा घटत्वकुड्यत्वादिजात्यन्तरसद्भावान्न घटत्वस्यैकत्वम् । घटादिषु घटस्याननुगतत्वादनेकानुगतत्वमपि नास्ति । तस्मान्नास्ति सामान्यमिति कश्चन पदार्थः । घटत्वादिस्तु घटादिधर्म एव । पदार्थानां सप्तत्वनियमोपि न युक्तः- शक्तिरूपपदार्थान्तरसद्भावात् । न हि तच्छक्तिस्तद्रूपैवेति वक्तुमर्हं- अग्निशक्तिरियमग्निरयमित्यनुभवविरोधात् । ब्रह्मशक्तेरज्ञानस्य मायादिपर्यायस्य द्रव्यादिपदार्थान्तर्भावानौचित्याच्च । द्रव्यादिकारणभूता हि सा ।

अथ द्रव्याणां नवत्वसङ्ख्यानियमोपि न युक्तः- अन्धकारोयमित्यनुभवसिद्धस्यान्धकारस्य द्रव्यान्यतरस्य सत्त्वात् । न च तेजोभावेन गतार्थता- तेजोभावोयमित्यननुभवात् । अनुभवस्य वाङ्मात्रेण दुरपलापत्वाच्च । तथा द्रव्येषु आत्मनः परिगणनमयुक्तं- निर्गुणस्यात्मनः गुणवद्द्रव्यत्वासम्भवात् । अविद्याशक्तिरूपस्य कालस्य न द्रव्यान्तरत्वम् । आकाशावान्तरभेदस्य दिक्पदार्थस्य न द्रव्यान्तरत्वम् । किंच द्रव्येष्वन्तःकरणमेव परिगणनीयं-- मनआदिचतुष्टयप्रकृतित्वात्तस्य । मनोग्रहणे तु बुद्ध्यादिसिद्धिर्न भवत्येव- घटग्रहणे शरावाद्यसिद्धिवत् । तस्मादन्तःकरणमेव द्रव्यं, न तु मनः ।

अथ वा मनोबुद्धिचित्ताहङ्काराश्चत्वारोपि द्रव्याण्येवेति कुत-

स्तदनुक्तिः । तथा जीवस्यानित्यज्ञानादिगुणकत्वलक्षणमयुक्तं- निर्गुणत्वात्तस्य । अतएव प्रतिशरीरं भेदोप्यनुचितः- निर्गुणस्य चैतन्यस्य एकत्वात् । ईश्वरस्य नित्यज्ञानादिगुणकत्वमप्यसिद्धं-- ईश्वरज्ञानस्य नित्यत्वे सदापि सृष्टिरेव स्यात्, 'तदैक्षत बहुस्या'मितीश्वरसङ्कल्पस्य नित्यत्वेन सङ्कल्पान्तरजननप्रयुक्तनाशायोगात् । आत्मनस्सर्वमूर्तद्रव्यसंयोगित्वरूपं विभुत्वमप्ययुक्तं- असङ्गानवयवस्वप्रकाशस्यात्मनस्संयोगासम्भवात् । सावयवं हि वस्तुद्वयमन्योन्यं संयुज्यते, संयुक्तं च तत्ससङ्गं भवति । अप्रकाशस्वप्रकाशवस्तुद्वयसंयोगे सति स्वप्रकाशस्य स्वप्रकाशत्वांशोप्यर्धं हीयेत- क्षीरनीरसंयोगे क्षीरगुणमाधुर्यार्धांशक्षयवत् । तथा आत्ममनस्संयोगादेव ज्ञानोत्पत्तिरिति नियमोप्ययुक्तः- सुषुप्तौ मनसि पुरीतत्प्रविष्टे सति आत्मनस्सुखानुभवोऽज्ञानानुभवोऽप्यस्तीति प्रबुद्धस्मरणात्सुखमहमस्वाप्सं, नकिञ्चिदवेदिषमित्येवंरूपादनुमीयते हि; सोऽनुभवस्त्वन्मते न सिद्ध्यति- तदानीमात्ममनस्संयोगाभावात् । न चानुभव एव नास्तीति वाच्यं, अनुभवं विना स्मरणानुपपत्तेः । किं च ज्ञानस्योत्पत्तिरिति नियमोप्ययुक्तः- नित्यज्ञानस्योत्पत्त्ययोगात् । नित्यज्ञानं चैतन्यमात्मैवेति वेदान्तसिद्धान्तः ।

अपि च सृष्टेः प्राक् मनसोऽभावेन ईश्वरस्य सृष्टिसङ्कल्पोपि न स्यात् । सृष्टेस्सङ्कल्पपूर्वकत्वश्रवणात्सङ्कल्पाभावे सृष्टिरेव न स्यात् । तस्मान्मनोजन्यमिव मायाजन्यमपि ज्ञानमस्तीति मनोवृत्तिरेव ज्ञानमिति नियमोपि न युक्तः । ज्ञानाभावोऽज्ञानमित्यप्ययुक्तं- ज्ञानाभावानामानन्त्यादज्ञानस्यैकत्वात् । अज्ञोहमस्मीत्यज्ञानानुभवदर्शनात्, घटज्ञानाभाववानहमित्याद्यनुभवाभावात् । तथा अभावाद्भावोत्पत्तिरित्य-

प्युक्तं-- कारणं हि कार्यात्मना परिणममानं दृश्यते-- मृदो घटात्मना तन्तूनां पटात्मना च परिणामदर्शनात् । यद्वा रक्तस्य क्षीरात्मना क्षीरस्य दध्यात्मना च परिणामदर्शनात् । एवं कारणमभावोपि कार्यात्मना परिणमेतावश्यं, तद्वद्व्ययुक्तं-- यदभावस्य भावात्मना परिणामः, न हि शशशृङ्गादिरभावपदार्थो घटादिभावात्मना परिणमेत । किं च कार्यस्य कारणात्मकत्वात्कारणादनन्यत्वं घटस्य मृदात्मकत्वान्मृदनन्यत्वदर्शनात् । ततश्च अभावादुदितस्य कार्यस्य घटादेरभावात्मकत्वादभावादनन्यत्वमेव भवेदिति सर्वमपि कार्यजातं शून्यमेव स्यादिति शून्यवादः प्रसज्येत तव ।

अथ घटाभावाद्घटोत्पत्तिरिति वादिनं भवन्तं पृच्छामि-- किं घटस्य घटाभावस्समवायिकारणम् ? यद्वा असमवायि ? अथ वा निमित्तम् ? न तावदाद्यं- यत्समवेतं कार्यमुत्पद्यते तत्समवायि- यथा तन्तवः पटस्य- तन्तुसमवेतस्सन् हि पटो जायते इति हि तव समयः । तथा घटाभावसमवेतस्सन् किं घटो जायते ? न हि घटतदभावयोस्समवायो युज्यते- भावाभावयोर्विरुद्धत्वेन सामानाधिकरण्यासम्भवात् । नाप्यसमवायिकारणं-- तन्तुसंयोगः पटं प्रत्यसमवायिकारणं; तन्तुरूपं पटरूपस्य च कार्येण कारणेन वा सहैकस्मिन्नर्थे समवेतं सत्कारणमसमवायिकारणमिति हि तव सिद्धान्तः । घटाभावस्य संयोगादिरूपत्वाभावान्नासमवायिकारणत्वम् । नापि निमित्तकारणं-- पटस्य तुरीवेमादिनेव घटस्य घटाभावेन सम्पादनीयस्वरूपाभावात् । अथ वा भवतु घटाभावो घटं प्रति निमित्तकारणं- कार्यनियतपूर्ववृत्तिकारणमिति तव सिद्धान्तात्, घटोदयात्प्राग्घटाभावस्य सत्त्वाच्च । तथापि न निमित्त-

कारणात्कार्यस्योदयः- मृद इव दण्डाद्घटोत्पत्त्यदर्शनात्। जनिकर्तुः प्रकृतिरिति सूत्रेण जायमानस्य हेतुरुपादानं प्रकृतिः। ततः पञ्चमी-स्यादिति प्रतिपादितत्वेन घटाभावाद्घट इति घटाभावप्रादिपदिका-त्पञ्चम्या एवासिद्धेः। सिध्यतु वा यथाकथञ्चित्पञ्चमी, भवतु वा घटा-भावोपि घटं प्रति निमित्तं, तथापि अभावादेव भावोत्पत्तिरिति नियमः कथम्? समवायिकारणस्य मृदस्सत्त्वात्, घटाभावरूपनिमित्तकारणसह-कृतात् मृद्रूपात्समवायिकारणाद्धि घटस्योदयः। सिद्धान्ते तु घटाभाव-स्याभावरूपत्वात्कारणस्य च भावरूपत्वाद्घटाभावस्य न निमित्तकारणत्वं, नापि घटाभावसिद्धिः- अभावरूपपदार्थस्यैवासत्त्वादिति बोध्यम्।

ननु यद्यभावो नास्ति तर्हि घटो नास्तीति घटाभावानुभवः कथमिति चेदुच्यते—अनुपलब्धिरूपप्रमाणादिति। न चानुपलब्धि-वशादप्यविद्यमानघटाभावानुभवः कथमिति वाच्यं, नायं घटाभावानुभवः, घटाभावोस्तीति प्रतीत्यभावात्, किंतु घटानुभावाभाव एवेति।

नन्वेवमपि अभावरूपपदार्थस्यैवानङ्गीकारात्कथं तव मते घटा-नुभवाभावसिद्धिरिति चेन्नैष दोषः—अभाव इति कश्चनातिरिक्तः स्वतन्त्रः पदार्थो नास्तीत्यस्माकमभ्युपगमः? तथा च घटादिप्रतियोगि-पदार्थाधीनसत्ताकाभावसिद्धिः। नच नापि घटाभावसिद्धिरिति स्ववचन-व्याघात इति वाच्यं, स्वाभाविकसत्ताशालिनो घटाभावस्यासिद्धिरिति विवक्षितत्वात्। तस्माद्घटादिप्रतियोगिका अभावा बहवस्सन्तु नाम, न ते स्वतन्त्राः पदार्थाः; नापि ततोपि घटादिकार्योत्पत्तिरिति।

ननु घटादिप्रतियोगिकस्याभावस्य कथं भावत्वमिति चेन्नायं दोषः—प्रतियोगिघटादिनिष्ठभावत्वेनाभावस्यापि तद्व्यवहारात्। अधि-

ज्ञानरूपत्वादभावस्येति वा । अयं चाभावो मायाधर्मत्वाद्गुण एव–अनृतजाड्यदुःखानां मायाधर्मत्वव्यपदेशात्, अनृतपर्यायत्वादभावस्य । त्वदभिमताभावस्य तु भावत्वं विरुद्धमेवं तस्मादभावस्य गुणेष्वन्तर्भावान्नातिरिक्तपदार्थत्वं, प्रतियोग्यधीनत्वान्नापि स्वतन्त्रपदार्थत्वं; नापि तस्मादभावाद्धटादिभावोत्पत्तिरित्यनवद्यम् ।

अथ तर्काध्ययनान्मुक्तिरित्यप्ययुक्तम्—पृथिव्यादिपदार्थतत्त्वज्ञानस्य मुक्त्यहेतुत्वात्, व्यभिचारबाधादिग्रन्थाध्ययनस्य वादान्यफलासम्भवात्, आत्मतत्त्वस्यात्राप्रतिपादितत्वात्, कथं चित्तत्प्रतिपादनेपि जीवेश्वरभेदस्य तत्सगुणत्वस्यैवैतच्छास्त्रसिद्धान्तविषयत्वात्, 'द्वितीयाद्वै भयं भव'तीति जीवातिरिक्तजीवनियामकेश्वरज्ञानस्य भयहेतुत्वात्, तर्कशास्त्रप्रतिपादितद्वैतज्ञानमनर्थहेतुरेव ।

अथ चरमदुःखध्वंसो मोक्ष इत्यप्ययुक्तम्—सुषुप्तिमृतिमूर्छादिषु चरमदुःखध्वंससत्त्वेप्यपुनरावृत्तिलक्षणमोक्षाभावात् । किंच दुःखध्वंसस्त्वन्मतरीत्या दुःखप्रध्वंसाभावरूपाभावपदार्थ एवेति भावरूपमोक्षत्वं कथं तस्य । तथा दुःखस्येव सुखस्यापि वैषयिकस्य बन्धहेतुत्वेन सत्यपि चरमदुःखध्वंसे वैषयिकसुखसद्भावात्कथं मोक्षः ।

इति तर्कमतखण्डनं नाम चतुर्थप्रकरणम् ।

---

## सदसत्कार्यवादखण्डनम् ।



अथ सत्कार्यवादी प्रत्यवतिष्ठते—असतस्सत उत्पत्तेरयुक्तत्वात्सत एव सदुत्पद्यते- मृदादेस्सत्पदार्थाद्घटादिसत्कार्योत्पत्तिदर्शनात् । नच उत्पत्तेः पूर्वमपि सतः कथमुत्पत्तिरिति वाच्यं, घटादिकार्य-

मुत्पत्तेः प्रागपि मृदादिकारणरूपेणास्ति; सद्द्रव्यस्य पिण्डत्वाद्यवस्थात्यागपूर्वकघटत्वाद्यवस्थापत्तिर्भवति; तत्र पिण्डरूपेण संस्थितस्य मृद्द्रव्यस्य घटरूपापत्तिर्घटस्योत्पत्तिः; पिण्डरूपत्यागः पिण्डस्य नाशः। एवं सति कम्बुग्रीवाद्याकारविशेषस्य घटादिनाम्न एवापूर्वस्योत्पत्तिः; मृद्द्रव्यं तु कालत्रयेप्येकमेव; कालत्रयं नाम घटोत्पत्तिस्थितिलयोपाधिभूतं इति सत एव द्रव्यस्योत्पत्तिः; उत्पद्यमानं तत्कार्यं च सदेव- सद्रूपकारणाभिन्नत्वात्कार्यस्य। ततश्च सतो ब्रह्मण उदितमिदं जगत्सदेवेति, चेन्मैवम्—सत उत्पत्तिरित्ययुक्तं- सतो घटस्य पुनरुत्पत्त्यदर्शनात्। पूर्वमसन् हि पुत्रादिरुत्पन्नो दृश्यते, न हि कोपि पुत्रोत्पत्तेः प्राक् मम पुत्रोऽस्तीति मन्यते। नच कार्यमुत्पत्तेः प्राक्कारणरूपेणास्तीति वाच्यं, उत्पत्तेः प्राक्कार्यस्यैवाभावे कथं पुनस्तस्य कारणरूपेणावस्थानम्। यदुक्तं कारणद्रव्यस्यैवावस्थान्तरापत्तिः कार्यस्योत्पत्तिरिति तदस्माकमिष्टमेव—कारणस्य क्षीरादेः कार्यदध्याद्यात्मना परिणामदर्शनात्। तत्रापि कारणद्रव्यस्य सतः न पुनरुत्पत्तिः, किंत्वसतः कार्यस्यैव। कारणमवस्थान्तरमापद्यत इति हि भवदभ्युपगमः- तत्रापि तदवस्थान्तरं किं, सदुतासत्? नाद्यः- पिण्डस्य घटोत्पत्तेः प्राग्घटावस्थाऽभावेन घटरूपावस्थान्तरस्यासत्त्वात्। तस्मादसदित्येव परिशिष्यते। तथा च पूर्वमसतोरेव घटाकारनाम्नोरुत्पत्तिरिति कथं तव सत्कार्यवादसिद्धिः। नाप्यसत्कार्यवादसिद्धिः- असतामुत्पत्तिरूपसत्त्वायोगात्। अन्यथा शशशृङ्गस्याप्युत्पत्त्यवश्यम्भावात्। अतस्सद्द्रव्यस्यासद्द्रव्यस्य वा उत्पत्त्ययोगान्मिथ्यैव कार्यमुत्पद्यत इति मिथ्याकार्यवादसिद्धिः। नच मिथ्याकार्यस्यापि कथमुत्पत्तिरिति वाच्यं, अनिर्वचनीयत्वस्यैव मिथ्याकार्यलक्षणत्वात् अयं

घटादिः पूर्वं सन्नेवोत्पन्न इति पूर्वमसन्नेवोत्पन्न इति वा वक्तुमशक्यत्वान्मिथ्याभूत एव घट उत्पन्नः रज्जुसर्पवदित्यस्मत्सिद्धान्तात् । तस्मात्सतो ब्रह्मण उत्पन्नमपीदं जगद्रूपं कार्यं मिथ्याभूतमेव ।

इति सदसत्कार्यवादप्रतिक्षेपोनाम पञ्चमप्रकरणम् ।

---

## परमाणुकार्यवादखण्डनम् ।



**अथ परमाणुकार्यवादी प्रत्यवतिष्ठते**— कार्यकारणयोर्घटमृत्पिण्डयोः पृथिव्यात्मकत्वेनैकरूपत्वदर्शनाज्जडज्ञानयोर्जगद्ब्रह्मणोः कार्यकारणत्वायोगात्परमाणव एव जगत्कारणम्; निरवयवा नित्याश्च परमाणवः; परमाणुद्वयसंयोगादणुद्व्यवयव उत्पद्यते; अणुद्वयसंयोगाद्व्यणुकमुत्पद्यते; ततस्त्र्यणुकमित्येवं क्रमेण सर्वजगदुत्पत्तिरिति । **नेदं मतं समीचीनम्**— सावयवयोर्द्वयोर्वस्तुनोस्संयोगे सति अवयवाधिक्यात्प्रथिमोपपद्यते-- कूपजलस्य वर्षजलसंयोगाद्वृद्धिवत् । तस्यैव सावयवस्य वस्तुन अवयवनाशात्क्षयश्चोपपद्यते-- जलाहरणाद्ग्रीष्मे कूपजलक्षयवत् । प्रकृते तु निरवयवपरमाणुद्वयसंयोगात्कथमणुत्वरूपस्य प्रथिम्न उपपत्तिः । बहवोपि निरवयवाः परमाणवस्संयुक्ता एकपरमाणुपरिमाणा एव भवन्ति, तेषामवयवाभावादवयवाधिक्यप्रयुक्तत्वाच्च परिमाणाधिक्यस्य । किंच निरवयवानां संयोगएव नोपपद्यते- संयोगानन्तरं कपिवृक्षयोरिव द्वयोर्वस्तुनोरभावात् । परं तु तादात्म्यमभेदो वा युज्यते ।

अथ परमाणुवियोगाल्लय इत्यपि न युक्तम्—संयोगपूर्वकत्वाद्वियोगस्य । किंच बहूनां परमाणूनां संयोगादपि संयुक्तस्यैकस्यैव पर-

माणोरसिद्धत्वान्निरवयवस्य तस्य कथं पुनर्विभागः । नच परमाणवो नित्या इत्यपि युक्तमप्रामाण्याद्ध्येतरस्यानित्यत्वाच्च । नच ब्रह्मस्वरूपाः परमाणव इति युक्तं वक्तुं- ब्रह्मण एकत्वात्, परमाणूनामानन्त्यात् । नच परमाणुस्वरूप एवात्मेति वाच्यं, तस्य सर्वव्यापकस्यात्मनः परमाणुत्वायोगात् । नच 'अणोरणीया'निति श्रुतिप्रामाण्यादात्मा परमाणुरिति वाच्यं, 'महतो महीया'निति श्रुत्यन्तरविरोधात् । अणोरणीयानित्यस्य दुर्विज्ञेयत्वलक्षणसूक्ष्मत्वमेवार्थः ।

ननु जीवः परमाणुरेव, उत्क्रान्त्यादिषु समीपस्थैरप्यदृश्यमानत्वादिति चेन्मैवम्——जीवब्रह्मणोरेकत्वेन जीवस्यापि व्यापकत्वात् । बुद्धिपरिच्छेदवशात्तस्याणुत्वप्रसिद्धेः । बुद्धिपरिच्छिन्नस्याणोस्तस्य दुर्दर्शत्वसम्भवात् । तस्मात् नित्याः परमाणवो न सन्त्येव, अनित्या अपि निरवयवा न सन्ति । किं तु सावयवा अणव एव । तेषां घटाद्युपादानत्वमस्माकमिष्टमेव-- धूलीपुञ्जादम्बुसंयोगवशेन पिण्डीभूताद्घटोत्पत्तिदर्शनात् । नचैतावता जगतो ब्रह्मकार्यत्वव्याघातः- ब्रह्मकार्यत्वात्तेषामणूनामपि ।

इति परमाणुकार्यवादखण्डनं नाम षष्ठप्रकरणम् ।

---

## स्वभावकार्यवादखण्डनम् ।



अथ स्वभावकार्यवादी प्रत्यवतिष्ठते——अग्नेरौष्ण्यमिव सृष्टिस्थितिलया जगतस्वाभाविका एव- अंकुरादिकमिव पृथिव्यादिभूतपञ्चकं स्वभावादेव जातम्; तत्संयोगवशाच्चैतन्यं च स्वत एव जातं सुधाहरिद्रा-

संयोगादारुण्यवत् । स चैतन्यं संयुक्तं भूतपञ्चकमेव देहीत्युच्यते; अस्य च देहिनस्स्वत एव जन्मस्थितिभङ्गाः; नष्टश्चायं देही न पुनर्जायते— निर्वाणस्य प्रदीपस्य पुनरुदयादर्शनात् । एवं देहिनः पूर्वजन्मापि नास्ति- देहातिरिक्तस्याभावादुत्पत्तेः प्राग्देहस्यैवासत्त्वाच; इति ।

अहो! नास्तिकस्य प्रज्ञादौर्बल्यम्! तथाहि, उपादानात्कार्य- स्योदयो दृष्टः मृद उदितघटदर्शनात् । नच मृदमनुपादाय स्वतएव घटो जातः- प्रत्यक्षविरोधात् । अतः कार्यमात्रस्य केनचिदुपादानेन भाव्यं, तच्चोपादानं वक्तव्यं त्वया कार्यस्य जगतः । नच स्वभाव एवोपादान- मिति वाच्यं, स्वभावस्य स्वानन्यत्वात्स्वस्य स्वोपादानकत्वस्य विरु- द्धत्वात् । उपादानं हि कार्यात्पूर्वभावि भवितव्यं, कार्यत्वकारणत्वयो- रेकस्मिन् सत्त्वं कथमुपपद्येत । तस्मात्स्वभावादन्यदेवोपादानं वक्तव्यम् । नच शरीराणां भौतिकानां भूतान्युपादानानि, भूतानां च पृथिव्यादीनां जलादीन्युपादानानीति वाच्यं, प्रथमभूतस्याकाशस्य निरुपादानकत्वे- नासिद्धौ तत्कार्यवाय्वाद्यसिद्धेः, भूतानामेवासिद्धौ भौतिकानां सुतरा- मसिद्धेश्च । अंकुरादिकमपि पृथिवीगतबीजादेव जातं, नतु स्वत इति, दृष्टान्तासिद्धेः, जडानां भूतानां संयोगाज्ज्ञानोत्पत्तिरित्यप्यतीव चित्रं-- दृष्टान्ताभावात् । नच सुधाहरिद्रासंयोगजन्यारुण्यं दृष्टान्त इति वाच्यं, सुधाहरिद्रयोरिवारुण्यस्यापि जडत्वात् । किं च चैतन्यस्य जन्मनाशौ, किं चैतन्येनानुभूयेते ? उतान्येन ? नाद्यः- स्वस्य स्वजन्मनाशानुभवा- योगात् । न द्वितीयः- अन्यस्य जडत्वात् । न च चैतन्यान्तरेणेति वाच्यं, पितृचैतन्यजन्मनः पुत्रचैतन्यनाशस्य चासाक्षिकत्वापत्तेः, पुत्र- चैतन्यजन्म पितृचैतन्येन पितृचैतन्यनाशः पुत्रचैतन्येन चानुभूयतां नाम ।

न च पितृचैतन्यजन्मनः पितामहचैतन्येनानुभवोऽस्त्विति वाच्यं, एवं पितामहादिपरम्परायां यस्यकस्यापि मूलभूतचैतन्यस्याङ्गीकर्तव्यत्वात्तस्य चैतन्यस्यानुभवो जन्मनः किंसाक्षिकस्स्यात् ? असाक्षिकस्याभ्युपगमो न हि युक्तः । तस्मान्मूलभूतमनादि चैतन्यं त्वयाप्यवश्यमभ्युपेयमभ्युपेते च तस्मिन् चैतन्यस्य भूतपञ्चकजन्यत्वरूपस्वसिद्धान्तपरित्यागएव सम्प्राप्तस्तव । नच प्राथमिकचैतन्यस्य भूतपञ्चकाजन्यत्वेनानादित्वेप्यर्वाचीनचैतन्यानि भूतसंयोगजन्यत्वेन सादीन्येव, तथा वाय्वादीनां भूतानां जन्यत्वेप्याकाशोऽनादिरेवेत्याकाशादुपादानात्सर्वजगदुदयश्चेति वाच्यं, असत्कार्यवादस्य निरस्तत्वेन भूतसंयोगात्प्रागविद्यमानस्य चैतन्यस्य संयोगादुत्पत्त्यसिद्धेः । नच दारुद्वयसंयोगादविद्यमानानलोत्पत्तिदर्शनान्न दोष इति वाच्यं, दारुद्वये सूक्ष्मरूपेण सतएवाग्नेस्तत्संयोगादभिव्यक्तिरूपोत्पत्तिरिति दृष्टान्तासिद्धेः ।

अथ यदि तद्वदेव चैतन्यमपि भूतपञ्चके सूक्ष्मरूपेणास्तीत्युच्यते, तर्हि चैतन्यमनादीति सिद्धमेव । तस्मान्मूलचैतन्यवदर्वाचीनचैतन्यान्यप्यनादीन्येव । किंच चैतन्यबहुत्वमप्ययुक्तं- दार्वानन्त्येप्यग्नेरेकत्ववद्भूतभौतिकानामानन्त्येपि चैतन्यस्यैकत्वमेव । नचाग्नेरेकत्वेपि तज्ज्वालानामानन्त्याच्चैतन्यस्यैकत्वेपि तत्प्रकाशानामानन्त्यमिति वाच्यं, चैतन्यधर्माः प्रकाशवृत्तिज्ञानरूपा अनन्ता एव; विषयानुभवादिरूपास्तु चैतन्यादपृथग्भूता एव; आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति तद्धर्माः- अपृथक्त्वेपि चैतन्यात्पृथगिवावभासन्त इति सिद्धान्तात् । वृत्तिज्ञानानां चैतन्यधर्मत्वं तु भ्रान्तिसिद्धमेवेति न चैतन्यस्य पृथग्भूताः प्रकाशास्सन्ति; तत्सत्त्वे तु अग्निज्वालानामिव चैतन्यप्रकाशानामुत्पत्ति-

नाशोपपत्तिस्स्यात् ; तद्द्वारा चैतन्यस्याप्यग्नेरिवोत्पत्तिनाशप्रतीतिस्स्यात् ; तस्मान्निरवयवमनादि नाशरहितं च चैतन्यमेकमेव । नच चैतन्यस्य नाशोस्त्विति वाच्यं, असाक्षिकनाशानभ्युपगमात्, चैतन्यस्यान्यस्याभावात्, चैतन्येतरस्य जडत्वाच्च ।

अथ वाय्वादीनां जन्यत्वेप्याकाशोऽनादिरित्युक्तिरप्ययुक्ता—निरवकाशे परिपूर्णे अनादिचैतन्ये अवकाशासम्भवात् । अवकाशधर्मकत्वाच्चाकाशस्य तावदध्यस्तत्वं सिद्धम् ; अध्यस्ता वाय्वादय इवाकाशोपि कार्यमेवेति । नच भवन्मते अध्यस्तमायायाः कार्यत्वादर्शनात् अध्यस्ताकाशस्यापि न कार्यत्वनियम इति वाच्यं, मायायास्स्वत एवाध्यासः, आकाशस्य तु माययेति वैषम्यात् ।

ननु यथा मायायास्त्वन्मते स्वत एवाध्यासस्तथाऽस्मन्मते आकाशादीनामपि स्वत एवोत्पत्तिरिति चेन्मैवम्—ब्रह्मणि विद्यमानस्य जगद्रूपकार्यानुमेयस्य जगज्जननादिसामर्थ्यस्यैव मायापदवाच्यत्वात् । यथाग्नेस्स्वत एव दाहशक्तिस्तथा ब्रह्मणस्स्वत एव सृष्ट्यादिशक्तिरित्यभिप्रायेण मायायास्स्वत एव ब्रह्मण्यध्यास इत्यस्माभिर्विवक्षितम् । अध्यस्तत्वं तु मायायाः परमार्थतोऽसत्त्वादिति बोध्यम् । आकाशादयस्तु न ब्रह्मशक्तिस्वरूपाः, किंतु शक्तिकार्यभूता इत्यत आकाशादीनां न स्वत उत्पत्तिरुपपद्यते । तथा आकाशादीनां जडानां स्वतस्संयोगोपि न भवेदेव- कपिवृक्षसंयोगवत्स्वतो वृक्षपाषाणसंयोगस्यादर्शनात् । चेतनसङ्कल्पपूर्वको हि संयोगः । नच दैवादचेतनानामपि भूजलादीनां संयोगो दृश्यत एवेति वाच्यं, तत्र चेतनस्यैव दैवपदार्थत्वात् । नचादृष्टं दैवपदार्थ इति वाच्यं, अदृष्टस्यापि चेतननिष्ठत्वात् । अतएव महदहमादि-

तत्त्वसमुदायस्स्वयं परस्परं मिलितुमशक्नुवान ईश्वरं प्रार्थयित्वा तदनुग्रहेण मिलित इति भागवते दृश्यते । तस्माद्भूतानां स्वत उत्पत्तिस्स्वतस्संयोगश्चैतन्यस्य तज्जन्यत्वं चेत्येतत्सर्वमवद्यम् । चैतन्यस्य देहिनः नित्यत्वादेव स्वीकृतशरीरत्यागरूपनाशः शरीरान्तरस्वीकारस्रूपसृष्टिश्चेत्येतदध्यासवशादुपपद्यत इति न देहिनः पूर्वोत्तरजन्माभावः, देहस्य नाशेप्युदयेपि देहातिरिक्तस्य देहिनोऽनाशादनुदयाच्च देही नित्यएव ।

इति स्वभाववादखण्डनं नाम सप्तमप्रकरणम् ।

---

## मीमांसकमतखण्डनम् ।

अथ कर्मब्रह्मवादिनो मीमांसकाः प्रत्यवतिष्ठन्ते—'यज्ञाद्वर्षति पर्जन्यः पर्जन्यादन्नसम्भवः । अन्नाद्भवन्ति भूता'नीत्यादिश्रुतिस्मृतिप्रामाण्यात्कर्मैव ब्रह्म; विधिरेव वेदः; उपनिषदस्तु अर्थवादा एव; 'कर्मणैव हि संसिद्धिमास्थिता जनकादय' इति कर्मण एव मोक्षः; 'यावज्जीवमग्निहोत्रं जुहुया'दित्यादिश्रुतेः कदापि कर्म न त्याज्यमेवेति सन्न्यासो न कर्तव्यः; सर्वोपि लोकः कर्मसूत्रबद्धः; 'सुखस्य दुःखस्य न कोपि दाता परः प्रदातेति कुबुद्धिरेषा । अहं करोमीति वृथाभिमानस्स्वकर्मसूत्रग्रथितो हि लोक' इति स्मरणात् । इति, **नैतत्सांप्रतम्**—कर्मणो जडस्य क्रियाजन्यस्य नश्वरस्य नित्यज्ञानस्वरूपब्रह्मत्वायोगात् । नच न वयं यज्ञादिकं कर्म ब्रूमः, 'यज्ञः कर्मसमुद्भव' इति गीतावचनात् । किं तु अन्यदेवेति चेत्तर्हि किं तत् ? साङ्ख्याभिमतं प्रधानमस्मदभिमतं ब्रह्म वा ? वैदिकस्य तव कथमवैदिकप्रधानाभ्युपगमः । ब्रह्मण एव कर्मेति नामान्तरमिति चेत्तर्हि कृतकृत्यो भव !

ननु यज्ञादिविधिसाध्यं स्वर्गादिलोककारणं चापूर्वमदृष्टापरपर्यायं वयं कर्मेति ब्रूम इति चेन्नैवमपि—अपूर्वस्य यज्ञादिजन्यत्वेनानित्यत्वात्कथं ब्रह्मत्वं; ब्रह्म हि नित्यम् ।

अथ यदुक्तं कर्मणो वर्षादिफलसिद्धिरिति तदप्ययुक्तम्—नहि फलप्रदं कर्म, किंतु निमित्तमेव- यज्ञादिविधिप्रीतदेवानामेव फलप्रदत्वात् । जडस्य फलप्रदत्वमित्यप्ययुक्तं—फलप्रदानस्य चेतनधर्मत्वात्कर्मणो जडत्वाच्च । नच जडापि पृथिवी जलरत्नादिफलप्रदा दृष्टेति वाच्यं, पृथिवीखनितुः पुरुषस्य तददृष्टसहकृतेश्वरेच्छावशादेव जलादिलाभः, न त्वन्यथेति सिद्धान्तात् ।

अथ यदुक्तं कर्मणस्सकाशादेव वर्षान्नद्वारा भूतोदय इति, तदप्ययुक्तम्—जडस्य कर्मणोऽन्नस्य वाऽचेतनभूतोपादानत्वासम्भवात्- 'यतो वा इमानि भूतानि जायन्त' इति ब्रह्मणश्चेतनस्यैव प्राण्युपादानत्वश्रवणात् । 'अन्नाद्भूतानि जायन्त' इति श्रुतिस्तु अन्नाज्जातस्य वीर्यस्य अन्नाज्जातेन शोणितेन सह सम्बन्धाद्देहाकारपरिणाम इति कृत्वा अन्नाद्देहा भवन्तीत्यभिप्रायवत्येव; जीवस्तु 'अजो नित्य' इति श्रुतेर्न जायत एव । अथ यदि तवापि कर्मणो देहा जायन्त इत्येवाभिप्रायस्तर्हि कथं जीवसिद्धिः । यदि जीवोऽजो ज्ञानस्वरूप इत्येव तवाशयस्तर्हि सति तस्मिन् कथं कर्म भवेद्ब्रह्म, चेतनपरतन्त्रं ह्यचेतनम् । ब्रह्म चेश्वरत्वात्स्वतन्त्रं; स्वतन्त्रस्य कर्तृत्वं स्वतन्त्रः कर्तेति पाणिनिना सूत्रितम् । ततस्स्वतन्त्र ईश्वरश्चेतन एव सृष्ट्यादिकर्ता, नतु परतन्त्रं जडं कर्म । न च निमित्तकारणत्वेपीश्वरस्योपादानत्वं कर्मण एवेति वाच्यं, जन्यस्य कर्मणोऽनाद्युपादानत्वासम्भवान्मायैवोपादानम् । काल-

कर्मस्वभावादीनामीश्वरसहकारिकारणत्वं भागवते प्रोक्तम् । तस्मात्कर्म न ब्रह्म ।

अथ विधिरेव वेद इत्यप्ययुक्तम्—'प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते । एनं विदन्ति वेदेन तस्माद्वेदस्य वेद'तेति वेदलक्षणात् विधिनिषेधातीतप्रत्यग्ब्रह्मप्रतिपादनपराणि वाक्यान्यप्यपौरुषेयाणि वेदा एव- मोक्षोपायस्य ब्रह्मात्मैक्यज्ञानस्य प्रत्यक्षानुमित्यविषयत्वेन शास्त्रैकवेद्यत्वात् । अर्थवादा उपनिषद इत्यप्ययुक्तमुपनिषद्भिः कर्ममार्गस्यास्तुतत्वात्, स्तुतिवाक्यानि ह्यर्थवादाः-- यथा 'वायव्यगं श्वेतमालभे'तेति विधिवाक्यस्य 'वायुर्वै क्षेपिष्टा देव'तेति स्तुतिवाक्यमर्थवादः । उपनिषदस्तु ब्रह्मप्रतिपादनपरतया कर्ममार्गदूषिका एवेति न कर्मस्तुतिपराः ।

अथ कर्मणैव मोक्ष इत्यप्ययुक्तम्—संशुद्धिशब्दस्य चित्तशुद्धेरेवार्थत्वात्, कर्मणां चित्तशुद्धौ विनियोगस्य शास्त्रसम्मतत्वात्, 'नास्त्यकृतः कृते'नेति कर्मणो मोक्षाहेतुत्वश्रवणात्, मोक्षस्य कर्मजन्यत्वाभ्युपगमे स्वर्गादिवन्मोक्षस्यापि जन्यत्वेनानित्यत्वापत्तेः, नित्यस्य ब्रह्मस्वरूपस्यैव मोक्षत्वश्रवणाच्च । तस्मात्स्वर्गादिवदपूर्ववद्वा मोक्षो न कर्मजन्यः ।

अथ सन्न्यासो न कर्तव्य इत्यप्ययुक्तम्—'ब्राह्मणो निर्वेदमायात्, यदहरेव विरजेत्तदहरेव प्रव्रजे'दित्यादिश्रुतिभिर्ब्राह्मणस्य सन्न्यासविधानात्, यावज्जीवमिति श्रुतेर्गृहस्थविषयत्वात्, अगृहीतसन्न्यासो गृहस्थो 'यावज्जीवमग्निहोत्रं जुहुया'दिति श्रुतेरर्थात् । अथ सर्वोऽपि लोकः कर्मसूत्रबद्ध इति युक्तमेव-- तत्र कर्म करणं, कर्ता तु

परमेश्वर इति विवेकः । मनुष्यो रज्ज्वा पशुमिवेश्वरः कर्मणा देहिनो बन्धयतीति सिद्धान्तात् । एवमीश्वरस्य कर्मसापेक्षत्वं च 'वैषम्यनैर्घृण्ये न सापेक्षत्वा'दिति व्यासेनैव सूत्रितम् ।

इति मीमांसकमतखण्डनं नाम अष्टमप्रकरणम् ।

## समुच्चयवादनिरासः ।



**अथ ज्ञानसमुच्चयवादः प्रस्तुत्य खण्ड्यते**—न कर्मणा मोक्षः केवलेन, नापि ज्ञानेन- उभयश्रुतिसद्भावात् । अतः कर्मसमुच्चितेन ज्ञानेन मोक्ष इति, **नैतदपि युक्तम्**—ज्ञानकर्मणो स्तेजस्तिमिरवत्समुच्चयायोगात् । तथाहि, अकर्त्रभोक्तृ सच्चिदानन्दं ब्रह्माहमिति ज्ञानवान् पुरुषः कर्ता भोक्ता ब्राह्मणोहमित्यध्यासवता पुरुषेण कर्तव्यं यज्ञादिकर्म कथं कुर्यात् , न कथमपि । नच ज्ञानिनापि जनकेन कर्मणां कृतत्वाददोष इति वाच्यं, जनकादिकर्मणः कर्मत्वस्यैवाभावात्- लीलामात्रं हि तत्कर्म- ईश्वरकर्मवत् । यद्वा आत्मानात्मनोस्तादात्म्याध्यासे सति अनात्माहङ्कारादिगतकर्तृत्वादिधर्माणामात्मन्यारोपः, तदभावे तदभावः, ज्ञानिनां त्वध्यासाभावात्कर्तृत्वाद्यभाव इति कथं जनकादीनामध्यासशून्यानां कर्तृत्वादिकम् ? न कथमपि । परंतु अज्ञानां यथा स्वदेहे आत्मबुद्धिः तथा जनकादिदेहेपीति कृत्वा अज्ञाः स्वदेहगतक्रियास्स्वात्मन्यारोप्य यथा वयं कर्तार इति स्वात्मनो मन्यन्ते तथा जनकादिदेहगतक्रिया अपि जनकाद्यात्मन्यारोप्य जनकादीन् कर्तॄन् ब्रुवन्ति; विज्ञास्तु विपर्ययेण स्वात्मानमिव जनकादीनपि ब्रह्मेत्येव मन्यन्ते—एकत्वादात्मन इति ।

नन्वेवं जनकादीनां स्वदेहे आत्माध्यासाभावे कथं तद्देहस्य गमनादिव्यवहारः, न ह्यनध्यस्तात्मभावेन देहेन कश्चिद्व्याक्रियते इति, चेदुच्यते—देहान्यकर्त्रात्मवादिनां वैदिकानां यथा स्थूलोहमित्यादिव्यवहारस्तथा ज्ञानिनामपि बाधिताध्याससत्त्वाद्यावत्प्रारब्धं देहेन्द्रियादि व्यवहारः। उक्तं हि भागवते— 'देहोपि दैववशगः खलु कर्म यावत्स्वारम्भकं प्रतिसमीक्षत एव सासु'रिति। अथवा अस्तुनाम ज्ञानिनां यज्ञादिकर्म, तथापि ब्रह्माहमस्मीति ज्ञानकाले न कर्मसद्भावः, परं तु विद्वानपि बाधिताध्यासानुवृत्तिवशात्कर्मकाले ब्राह्मणोहमित्याद्यभिमन्यमान एव कर्म करोति, तस्मिंश्च ब्राह्मणत्वाद्यभिमाने विदुषो मिथ्यात्वबुद्धिरस्ति; अविदुषस्तु नेति भेदः; मिथ्याज्ञानवतामप्यैन्द्रजालिकविनोददर्शने प्रवृत्तिर्दृश्यते हि। अत एव विदुषां कर्म लीलामात्रमित्युक्तम्। एवं कर्मकाले ब्राह्मणत्वाद्यभिमानलेशस्यावर्जनीयत्वाद्विदुषां न कर्माधिकार इति सन्न्यासस्सिद्धान्तितस्तेषाम्। विद्वद्भिस्सर्वात्मना अनात्माभिमानो नाशयितव्यो हि। किंबहुना? ज्ञानकाले समाध्याधौ कर्मादर्शनात्कर्मकाले ज्ञानिनामपि ज्ञानस्याप्रकाश एवेति न ज्ञानकर्मणोस्सह स्थितिः। अस्तु वा कर्मकालेपि कामः कर्ता नाहं कर्तेत्यादिज्ञानं विदुषां श्रीकृष्णादिवत्। तथापि मोक्षंप्रति न कर्मज्ञानसमुच्चयस्य हेतुत्वम्। कर्म कुर्वतामपि विदुषामहङ्कारादिरेव कर्ता, न त्वहं, ब्रह्मैवाहमिति ज्ञानादेव मोक्षः, नतु कर्मणः, प्रत्युत ज्ञानाभावे कर्मणा बन्धएव। कर्म हि कर्तारं भोक्तृत्वेन बन्धयति।

ननु ज्ञानान्मोक्ष इत्यप्ययुक्तमेव-- मोक्षस्य ज्ञानजन्यत्वे अनित्यत्वापत्तेरिति चेन्मैवम्—ज्ञानान्मोक्षो जायत इति नास्माभिरुच्यते,

किं तु नित्यसिद्धस्यैव मोक्षस्य ज्ञानाल्लाभः- स्वगृहान्तस्थितस्य हिरण्यनिधेर्यथा ज्ञानाल्लाभस्तद्वत् । अज्ञानादहं बद्ध इति योऽभिमन्यते स एव ज्ञानादहं मुक्त इत्यभिमन्यत इत्येतावदेव ज्ञानसाध्यम् । न त्वपूर्वमुक्तिलाभः- आत्मनो नित्यमुक्तत्वात् ।

**वस्तुतस्तु** 'न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थ'तेति श्रुतेः बन्धमोक्षौ द्वावप्यपरमार्थावेव । नच मोक्षस्य कथमपरमार्थत्वमिति वाच्यं, बन्धपूर्वकत्वान्मोक्षस्य बन्धस्यासत्यत्वे कथं तत्पूर्वकमोक्षस्य सत्यत्वम् । अत्र मोक्षशब्दस्य बन्धान्मुक्तिरित्येवार्थः, नतु ब्रह्मेति । ब्रह्मणः पारमार्थिकत्वादिति बोध्यम् । तस्मादज्ञानजन्यस्य बन्धस्य ज्ञानादेव निवृत्तिः- ज्ञानाज्ञानयोर्विरोधात् । नतु कर्मणः- अज्ञानजन्यत्वेन तस्याज्ञानाविरोधित्वादिति न कर्मज्ञानसमुच्चयान्मोक्षसिद्धिः ।

**ननु** अज्ञानविरोधि ज्ञानमहं ब्रह्मेत्याकारकं, तद्धि अन्तःकरणवृत्तिरूपत्वादज्ञानजन्यमेव- अज्ञानकार्यत्वादन्तःकरणस्य । तस्मात्कथं तस्याप्यज्ञानविरोधित्वमिति **चेन्नैवम्**—अग्निकार्यस्य जलस्याग्निनाशकत्वदर्शनादज्ञानजन्यस्यापि वृत्तिज्ञानस्याज्ञाननाशकत्वमस्त्येव; कर्मणस्तु न मृज्जन्यघटस्य मृदनाशकत्ववत् । नाहं ब्रह्मेत्यज्ञानस्याहंब्रह्मेतिज्ञानं विरोधि; कर्म तु न विरोधि- नाहं ब्रह्मेत्यज्ञानपूर्वकत्वात्कर्मण इत्यभिप्रायेण अज्ञानजन्यत्वेन कर्मणोऽज्ञानाविरोधित्वमित्युक्तम् । तथा च नाहं ब्रह्मेति प्रतीतिरूपस्याज्ञानस्य बन्धकस्य ब्रह्माहमस्मीति ज्ञानादेव केवलान्निवृत्तिः, नतु नाहं ब्रह्मेति प्रतीतिपूर्वकात्कर्मणः, नापि कर्मणानुष्ठिताद्ज्ञानात्- विरुद्धयोस्तादृशज्ञानकर्मणोस्समुच्चयस्यैवासिद्धेः ।

इति समुच्चयवादनिरासो नाम नवमप्रकरणम् ।

---

मर्हति- आद्यन्तवर्तमानमृद एव घटेपि दर्शनात् । अतस्सर्वमपीदं जगच्छून्यमेव । एतस्मादेव ज्ञानात्सर्वानर्थनिवृत्तिरूपो मोक्ष इति ।

इदमत्यन्तमयुक्तम्—अभावस्य शून्यस्य अस्तित्वरूपभावत्वायोगात् । किं च सृष्टेः प्राक् शून्यमस्तीति केन ज्ञातम् ? न तावच्छून्येन तस्य जडत्वात् । नाप्यन्येन-- अभावादन्यस्यासत्त्वात् । अतोऽसाक्षिकस्य शून्यस्याभ्युपगमः कथं स्यात्, न कथमपीति शून्यमेवासिद्धम् । तथा शून्यज्ञानान्मोक्षः किं शून्यस्य? किमन्यस्य? न तावच्छून्यस्यासिद्धत्वान्नाप्यन्यस्य अभावात् । इति ।

ननु अनुभवस्य युक्तिभिर्दुरपलापत्वात् सुषुप्तौ शून्यानुभवात्कथं शून्यासिद्धिरिति चेन्नैवम्—सुषुप्तौ येन शून्यमनुभूतं तस्य चैतन्यस्यात्मनस्सत्त्वात्कथं शून्यत्वस्य तवाभिमतस्य सिद्धिः ? जगदभावरूपशून्यं तु सुषुप्त्यादावस्त्येव- तद्धि अज्ञानादनतिरिक्तम् । अथ वा चैतन्यादनतिरिक्तं-- आरोप्याभावस्याधिष्ठानस्वरूपत्वात् । तस्मात् सृष्टेः प्राक्सद्रूपं ब्रह्मैवास्ति, 'सदेव सोम्येदमग्र आसी'दितिश्रुतेः । प्रलये च तदेवावशिष्यत इति मध्येपि सदेव । अतएव 'सर्वं खल्विदं ब्र'ह्मेति श्रुतिरुपपद्यते । तस्मिंश्च सद्रूपे ब्रह्मणि कालत्रयेप्येकरूपे प्रपञ्चप्रतीतिर्मृषैवेति बोध्यम् ॥

इति शून्यवादनिरासो नाम एकादशप्रकरणम् ।

---

## देहात्मवादखण्डनम् ।

अथ देहात्मवादी प्रत्यवतिष्ठते—देहादन्यो नास्त्यात्मा-- अनुपलब्धेः, स्थूलोहं मनुष्योहमित्याद्यनुभवाच्चेति, नैतत्साम्प्रतम्—

येन जडो देहादिरुपलभ्यते तस्यात्मनः कथमनुपलब्धिः। किंच अनुभवापरपर्यायाया उपलब्धेरेवात्मस्वरूपत्वेन कथंपुनस्तस्यानुपलब्धित्वं, अनुपलभ्यमानत्वं वा। अपि च यदि देह एवात्मा स्यात्तर्हि मम देहः कृश इत्यादिप्रतीतिर्न स्यात, देहान्यात्मासिद्धेः। वस्तुतस्तु करचरणाद्यवयवातिरिक्तं कश्चिद्देहोनामावश्यव्येवादुर्निरूपः—अवयवातिरिक्तस्यावयविनः कस्यचिदनुपलभ्यमानत्वात्। शिरसि मे वेदना, पादे मे वेदनेत्यादिप्रतीतिवशात्तु न देहस्य सिद्धिः- देहिन आत्मन एव तत्रास्मत्पदवाच्यत्वाभ्युपगमात। यदि त्वमपि करचरणाद्यवयवातिरिक्तं कञ्चनावयविनं देहत्वेनाभ्युपैषि तर्हि स देहो न करचरणादिमत्पिण्डरूपो भवितुमर्हति, किंतु तस्मादन्य एवेति सिद्धो देहान्य आत्मा। किं च यदि देह एवात्मा तर्हि देहे शय्यायां शयाने सति स्वप्नावस्थायामनुभूयमानं काश्यादिपुरान्तरसञ्चरणादिकमगतिकं स्यात्। नच स्थूलदेहादन्यस्सूक्ष्मदेह आत्मेत्युच्यत इति वाच्यं, सुषुप्तौ सूक्ष्मदेहलयस्याप्यनुभूयमानत्वाद्येनानुभूयते स एव स्वयमात्मेत्यवश्यमभ्युपगन्तव्यत्वात्। नापि कारणदेह आत्मेति वाच्यं, कारणदेहस्याज्ञानस्य ज्ञानात्मत्वासम्भवात्, आत्मनोप्यज्ञानस्वरूपत्वे जगदान्ध्यप्रसङ्गात्। तस्मादात्मज्ञाननाश्यमज्ञानमात्मेति वक्तुं न शक्यम्॥

इति देहात्मवादखण्डनं नाम द्वादशप्रकरणम्।

---

## इन्द्रियात्मवादखण्डनम्।

अथ इन्द्रियात्मवादी प्रत्यवतिष्ठते—पश्यामि शृणोमीत्यादिप्रतीतेः 'अस्मद्युत्तम' इति व्याकरणसूत्रादुत्तमपुरुषैकवचनमिवर्थ-

स्यास्मत्पदार्थस्यात्मत्वाद्दर्शनादिक्रियाकराणि चक्षुरादीन्द्रियाण्येवात्मेति, नैतद्युक्तम्—तथाहि, किमेकैकमिन्द्रियमेकैक आत्मा ? उत सर्वाणीन्द्रियाणि मिलितान्यात्मा ? न तावदाद्यः-- योहं घटमद्राक्षं सोहमिदानीं स्पृशामीति प्रतीत्या दर्शनस्पर्शनक्रियाकर्तृचक्षुस्त्वगिन्द्रियरूपात्मद्वयस्याभेदसिद्धेरयुक्तत्वात् । नहि चक्षुरिन्द्रियं त्वगिन्द्रियं भवितुमर्हति । ततश्च एकस्मिन्देशे बहुराजसमवायवदेकस्मिन्शरीरे बह्वात्मसमवायः, तेन च परस्परं कलहः, तेन च दर्शनस्मर्शनाद्यनिष्पत्तिरेव स्यात् ।

अथ वा युगपद्दर्शनश्रवणादिसर्वनिष्पत्तिस्स्यात् , तच्चानिष्टम्-- युगपत्सर्वेन्द्रियज्ञानानुत्पत्तेरनुभवसिद्धत्वात् । किं च युगपज्जायमानान्यपि सर्वेन्द्रियज्ञानानि ज्ञातुरेकस्याभावे असाक्षिकान्येव स्युः । नापि द्वितीयः- परस्परभिन्नव्यापाराणामिन्द्रियाणां सर्वेषामेकात्मत्वासम्भवात् , विभिन्नगोलकस्थानामिन्द्रियाणां सूक्ष्मपरिमाणानां मेलनायोगात् , सति तु मेलने चक्षुरुन्मीलनेपि रूपदर्शनप्रसङ्गात्। स्वप्नावस्थायामिन्द्रियव्यवहाराभावेपि तदतिरिक्तस्य व्यवहर्तुरात्मन उपलम्भाच्च नेन्द्रियात्मवादो न्याय्यः। चक्षुषा घटं पश्यामीत्यादिव्यवहारादिन्द्रियाणि करणानि, कर्ता त्वात्मैव ।

इतीन्द्रियात्मवादखण्डनं नाम त्रयोदशप्रकरणम् ।

---

## मन आत्मवादखण्डनम् ।



अथ मन आत्मवादी प्रत्यवतिष्ठते—सर्वव्यवहाराणां सङ्कल्पपूर्वकत्वात्सङ्कल्पव्यवहारयोस्सामानाधिकरण्यस्य न्याय्यत्वाद्वैयधिकरण्ये तु

देवदत्तसङ्कल्पितार्थस्य यज्ञदत्तकर्तव्यतापत्तेः, भोजनमहं कुर्यामिति सङ्कल्पितवत एव भोजनकर्तृत्वदर्शनात्, इन्द्रियव्यापाराभावसमयेपि सङ्कल्पयितुरात्मन उपलम्भात्सुख्यहं दुःख्यहं वाम्यहं क्रुद्धोहमित्याद्यनुभवाच्च सुखदुःखसङ्कल्पादिमन्मन एवात्मा देहे राजवद्वर्तते; इन्द्रियाणि तद्भटस्थानीयानीति, **नैतत्सम्यक्**—बहिरिन्द्रियाणां चक्षुरादीनामिवान्तरिन्द्रियस्य मनसोपि करणत्वेन कर्त्रात्मत्वायोगात्, मनसा चिन्तयतीत्यादिप्रतीत्या मनसः कणत्वस्य सुस्थितत्वात्, मम मनश्चपलमित्यादिभेदप्रतीतेः सुषुप्तावात्मसाक्षिकस्य मनोनाशस्य सत्त्वात्। सुख्यहमित्यादिप्रतीतीनां तु स्थूलोहमित्यादिप्रतीतीनामिवानात्मतादात्म्याध्यासमूलकत्वात्, अहं मन इति प्रतीत्यदर्शनात्, आत्मा स्वोपाधिभूतेन मनसा सङ्कल्प्य व्यवहरतीति कृत्वा कर्तृकरणधर्मयोर्व्यवहारसङ्कल्पयोर्वैयधिकरण्यस्यैव न्याय्यत्वात्, स्वव्यवहारस्स्वमनस्सङ्कल्पपूर्वक इत्यभ्युपगमेन देवदत्तसङ्कल्पितार्थस्य यज्ञदत्तकर्तव्यतापत्तिरूपदोषनिरासात्, आत्मना मनसो ज्ञायमानत्वाच्च दृश्यं मनो नात्मा- किन्त्वात्मन उपाधिभूतं करणमेव।

इति मन आत्मवादखण्डनं नाम चतुर्दशप्रकरणम्।

---

## अहङ्कारात्मवादखण्डनम्।

अथ अहङ्कारात्मवादी प्रत्यवतिष्ठते—आत्मनो ज्ञातृत्वादहं जानामीतिव्यवहारादहङ्कार एवात्मा; स एव लौकिकवैदिकव्यवहारेषु कर्ता भोक्ता च; अहं करोमि अहमनुभवामि सुखमित्यादिप्रतीतेरिति, **नैतदुचितम्**—निर्विकारे आत्मनि स्वाभाविकस्य कर्तृत्वादिविकार-

जातस्यानभ्युपगन्तव्यत्वादभ्युपगते वा तस्मिन् स्वस्य स्वविकारसाक्षित्वायोगेन आत्मान्यसाक्ष्यभ्युपगमे दृश्यत्वप्रसक्त्या जडएव स्यादात्मेति कथं तस्य ज्ञातृत्वम् । अहं करोमीत्यादिव्यवहारस्तु आत्मनोऽनात्माहङ्कारतादात्म्याध्यासाद्भवत्येव ।

**ननु** यद्यहङ्कारो जडत्वान्न ज्ञाता तर्हि ज्ञातुरेवाभावः- आत्मनो निर्धर्मकस्य ज्ञातृत्वरूपधर्मायोगात्, ज्ञाधात्वर्थस्य ज्ञानस्य क्रियारूपत्वेन ज्ञाता हि ज्ञानक्रियाश्रयः कर्तैव स्यादिति कृत्वा अकर्तुरात्मनो ज्ञानक्रियाकर्तृत्वायोगाच्चेति **चेन्मैवम्**— वृत्तिज्ञानस्यैव क्रियारूपत्वेन चैतन्यरूपस्य ज्ञानक्रियारूपत्वात् चैतन्यरूप आत्मैव स्वप्रकाशत्वेन परप्रकाशत्वेन च ज्ञातेत्युच्यते । अहङ्कारे ज्ञातृत्वं तु आत्मतादात्म्याध्यासकृतमेव, नतु स्वाभाविकम् । किंच सुषुप्तावहङ्कारलयस्सर्वानुभवसिद्ध एव । तत्र करोमीत्यादिव्यवहाराभावात् । तं चाहङ्कारलयं यो न भवति स एवात्मा, न त्वहङ्कारः स्वस्य स्वनाशानुभवायोगात्, आत्मनश्च सत्त्वात् । तस्मात्त्वपदार्थ आत्मा अहङ्कारादिभ्यो विलक्षण एवेति नात्मनः कर्तृत्वभोक्तृत्वादिसंसारप्रसङ्गस्सूर्यस्येव तिमिरप्रसङ्गः ।

इत्यहङ्कारात्मवादखण्डनं नाम पञ्चदशप्रकरणम् ।

---

## प्राणात्मवादखण्डनम् ।

**अथ प्राणात्मवादी** प्रत्यवतिष्ठते—येन देहोयं प्राणिति स प्राण एवात्मा; प्राणसत्त्वे जीवतीति, प्राणोत्क्रमणे मृत इति च सार्वजनीनप्रत्यक्षात्, स्वापावस्थायामिन्द्रियादिव्यवहाराभावेपि प्राणसत्त्वमात्रेण जीवसद्भावनिश्चयात्, इन्द्रियाणां प्राणाधीनप्रवृत्तिकत्वेन

प्राणस्य स्वामित्वात्। अस्मिन् देहरूपे गेहे जीवस्यैव यजमानत्वप्रयुक्त-स्वामित्वेन स्वामी प्राण एव जीवः। शरीरं विहाय जीवो गत इति प्राणो गत इति च जीवप्राणयोरभेदव्यवहारदर्शनाच्च, येन देहो जीवति स जीवः, येन देहं प्राणिति स प्राण इति च व्युत्पत्त्या प्राणजीव-शब्दयोरेकार्थबोधकत्वाच्च नास्ति प्राणादतिरिक्तो जीव इति, **नैत-त्सारम्**—जडस्य प्राणस्य ज्ञात्रात्मत्वायोगात्- वायुरूपस्य प्राणस्य वायुत्वाज्जडत्वं तावत्सिद्धम्। स्वापावस्थायां जीवे स्थूलदेहाभिमानं त्यक्तवति सति जाग्रतीवान्यूनानतिरिक्तसञ्चारं प्राणस्स्वयं वर्तमानमपि न कञ्चिदपि शय्यादिबाह्यार्थं वेदेति सर्वैर्विदितमेव। जीवस्य प्राणो-पाधिकत्वेन प्राणे निर्याते सति जीवोपि यात एवेति कृत्वा प्राणोत्क्र-मणवशाद्देहस्य मृतत्वव्यवहार इत्येतावन्मात्रेण प्राणस्य जीवत्वाभ्युपगम-स्यान्याय्यत्वात्। अन्नमयकोशस्थूलदेहवत्प्राणमयकोशस्य प्राणस्यापि जीवावारकत्वात्, अन्तर्यामिब्राह्मणे जीवस्य प्राणान्तस्स्थितिप्रतिपाद-नात्, प्राणोहमित्यात्मप्राणयोरभेदप्रतीत्यभावात्, मम प्राण इति भेद-प्रतीतिसत्त्वात्, क्षुत्तृड्रूपधर्मद्वयवत्त्वेन प्राणस्य सधर्मकत्वात्, क्षुधितोहं तृषितोहमिति प्रतीतेः प्राणात्माऽन्योन्यतादात्म्याध्यासमूलकत्वेन वस्तुत आत्मनि क्षुधादिधर्मायोगात्, सुषुप्तौ प्राणतादात्म्याध्यासाभावेनात्मनि क्षुधादिधर्मादर्शनात्, क्षुधादिरहितस्यात्मनस्सुषुप्तावनुभूयमानस्य प्राणत्वा-सम्भवाच्च प्राणादन्य एवात्मा।

इति प्राणात्मवादखण्डनंनाम षोडशप्रकरणम्।

## जीवाणुत्ववादखण्डनम् ।



अथ जीवाणुत्ववादी प्रत्यवतिष्ठते—जीवस्योत्क्रान्तिगत्यागतिश्रवणात्तत्र पार्श्वस्थैः पटुदृष्टिभिरगृह्यमाणत्वात्, 'वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवश्शततम' इति श्रुत्या च जीवोऽणुरेव; स च अंगुष्ठपरिमाणोपि दीपस्स्वप्रभया यथा गृहस्यान्तर्बहिश्च स्वगोचरं सर्वं विषयं प्रकाशयति, तथा देहस्यान्तर्बहिश्च स्वभासा सर्वमवभासयति- 'तस्य भासा सर्वमिदं विभा'तीति श्रुतेः यथा दीपस्स्वात्मानमन्यांश्च परस्मा अवभासयति तथा तत्प्रातिलोम्येन स्वात्मानमन्यांश्च स्वस्मा अवभासयतीति, पराग्धामभ्यो दीपादिभ्यो विलक्षणः-- प्रत्यग्धामा स्वयंज्योतिरयं यथाचाणोरपि चन्दनबिन्दोस्सर्वशरीरव्यापिशैत्यजनकत्वं तथा जीवस्याणोरपि सर्वविषयावगाहिज्ञानजनकत्वम् । यदि जीवो विभुस्यात्तर्हि तस्य बुद्ध्यादिभ्यः परिच्छेदो न स्यादुत्क्रान्त्यादयश्च न सम्भवेयुः, तस्मादणुरेव जीव इति, नैतत्समीचीनम्—ज्ञानस्वरूपस्य निरवयवस्यात्मनस्स्वात्मातिरिक्तप्रभाऽसम्भवात् । तेजोमयो हि दीपस्स्वस्वरूपादन्ययैव विरलावयवया प्रभया गृहान्तस्थलं सर्वमवभासयतीति युक्तं, कथंपुनरात्मनो दीपसाम्यं-- दीपवत्सावयवत्वसगुणत्वयोरभावात् । स्वल्पस्यापि चन्दनबिन्दोर्यावच्छरीरव्यापित्वगिन्द्रियसम्बन्धवशात्सर्वाङ्गव्यापिशैत्यजनकत्वमुचितं, कथं पुनरणोरात्मन एकदा दर्शनश्रवणादिज्ञानजनकत्वं, शिरसि मे वेदना पादे मे सुखमिति युगपदुभयोपलब्धिश्च भवेत् । हृदयगतस्याणोर्जीवस्य चक्षुरादिसम्बन्धाभावात्कथं दर्शनादिकमयौगपद्येनापि स्यात्, चक्षुरादिसम्बन्धाभ्युपगमेपि चक्षुषो गत्वा ग्राहकत्वेन चक्षुषि युक्तस्यात्मनोपि चक्षुरासमं घटादिदेशं

गतत्वेन शरीरस्य निर्जीवत्वापत्तेश्च । अणोरात्मनस्त्वाप्निकजगदधिष्ठानत्वासम्भवाच्च । वालाग्रशतभागस्येत्यादिश्रुतयस्तु आत्मनो दुर्दर्शत्वलक्षणं सूक्ष्मत्वमेव बोधयन्ति, नाणुत्वम् । वालाग्रसहस्रभागस्य अनिर्वाच्यस्याणुत्वेन निर्वक्तुमशक्यत्वात् । उत्क्रान्तिगत्यादयस्तु बुद्ध्युपाधिपरिच्छेदवशाद्भवन्ति । स च बुद्ध्युपाधिकृतः परिच्छेदो जीवस्य मिथ्याभूत एव- अपरिच्छेद्यत्वाज्जीवस्य । परिच्छिन्नत्वे तु घटादिवदनित्यत्वप्रसङ्गादिति ।

ननु 'बुद्ध्यवच्छिन्नचैतन्यमेकं पूर्णमथापरम् । आभासस्त्वपरं बिम्बभूतमेवं त्रिधा चिति'रित्यध्यात्मरामायणे चित्त्रैविध्यं प्रदर्श्य अवच्छिन्नस्य पूर्णेन चैकत्वं प्रतिपाद्यत इति बुद्ध्यवच्छिन्नस्य जीवस्य पूर्णेन ब्रह्मणा एकत्व प्रतिपादनात् बुद्ध्यवच्छिन्नचैतन्यं जीवोऽणुपरिमाण एव, चैतन्यावच्छेदकबुद्धेरणुत्वात् । प्रतिबिम्बभूतस्याभासचैतन्यस्यैव मृषात्वमाभासस्तु मृषेति श्लोकेन तत्रैव प्रतिपादितम् । तदेवं वस्तुतो जीवेश्वरादिभेदाभावेन जीवस्य ब्रह्मत्वेपि व्यवहारतो बुद्धिपरिच्छिन्नस्य जीवस्य ब्रह्मत्वायोगात्, जीवस्य बुद्धिपरिच्छेदो न मिथ्याभूत इति जीवोऽणुपरिमाण एवेति श्रुतियुक्त्यनुभवारूढोऽयं पन्था इति चेन्मैवम्—अध्यासकार्यस्य व्यवहारस्य मिथ्यात्वाद्व्यावहारिकं चैतन्यबुद्धिपरिच्छिन्नत्वं मिथ्यैव- परमार्थतो बुद्धेरेवाभावात्कुतः परिच्छेदः । बुद्ध्यवच्छिन्नस्य चैतन्यस्य सत्यत्वकथनं तु चैतन्यगतसत्यत्वाभिप्रायेणैव- विशेषणांशस्य बुद्ध्यवच्छिन्नत्वरूपस्यासत्यत्वेपि विशेष्यचैतन्यस्य सत्यत्वात् । चैतन्यप्रतिबिम्बरूप आभासस्तु सर्वात्मना मृषैव— नीरूपस्य चैतन्यस्य प्रतिबिम्बायोगात् । कथंचित्सत्यपि प्रतिबिम्बे

दर्पणाधीनमुखप्रतिबिम्बवद्बुद्धयधीनचैतन्यप्रतिबिम्बस्य मृषात्वात् । तथा बुद्धयवच्छिन्नचैतन्यस्य पूर्णचैतन्येन सहैकत्वप्रतिपादनं च बुद्धयवच्छिन्नत्वांशत्यागादेव भवति, न त्वन्यथेति कृत्वा जीवो वस्तुतश्चैतन्यमात्रमेव; तस्य बुद्धयवच्छिन्नत्वं तु व्यावहारिकत्वान्मिथ्याभूतमेवेति सिद्धत्वान्न जीवो बुद्धिपरिच्छिन्नः, किंतु पूर्णचैतन्यमेव- वेदान्तमहावाक्यैर्जीवस्य पूर्णचैतन्यब्रह्मत्वस्य प्रतिपादितत्वात् । किंच सत्यवस्तुनो मिथ्यावस्तुभिः परिच्छेदस्यासम्भवात् परिपूर्णमपरिच्छेद्यमेकमेवाद्वितीयं ब्रह्मेति वेदान्तराद्धान्ते सति कथं तस्य बुद्धिपरिच्छेदः तत्कृतमणुत्वं च स्यात्, न कथमपि । या तु बुद्धिपरिच्छिन्नो जीवोऽणुरिति प्रतीतिस्सा भ्रान्तिरेव रज्जुसर्पप्रतीतिवत् । तस्मान्निर्धर्मकबोधरूपपरमानन्दपरब्रह्माभिन्नो जीवोऽणुरिति परिच्छिन्न इति च वक्तुं केनापि न शक्यते । न चैवमपि यावद्व्यवहारं जीवोऽणुरेव, बुद्धिपरिच्छेदसत्त्वाच्चैतन्यस्येति वाच्यं, सत्यपि नीलं नभ इति व्यवहारे बालगोचरे किं नभसो नीलत्वं यावद्व्यवहारं भवितु मर्हति ? सत्यामपि रज्जुसर्पभ्रान्तौ किं यावद्भ्रान्ति रज्जोस्सर्पत्वं भवितुमर्हति ? तद्वद्यावद्व्यवहारमपि चैतन्यस्यापरिच्छेद्यस्य परिच्छेदो भवितुं नार्हत्येव । नहि व्यवहारतोऽप्यन्यद्वस्तु वस्त्वन्तरं भवितुमर्हति । किंतु यावद्व्यवहारमन्यस्मिन्नन्यबुद्धिर्भ्रान्तिरेव; तया च भ्रान्त्या न ह्येकस्य वस्तुनोऽन्यवस्तुत्वं भवति, अविवेकिभिस्सर्पत्वेन गृह्यमाणापि रज्जुः रज्जुत्वं नैव जहाति, सर्पत्वं नैव भजते, तथा अज्ञैः बुद्धिपरिच्छिन्नत्वेन गृह्यमाणमपि चैतन्यं न परिच्छेदं भजते, नापि स्वात्म्यं जहाति; तस्मात् व्यवहारदशायां परमार्थदशायां च जीवो ब्रह्मैव ।

तस्मिन् परिच्छेदबुद्धिस्त्वस्माकं भ्रान्तिरेवेति कृत्वा। सर्वदा सर्वथापि जीवो विभुरेव, नाणुः। उपाधिभूतबुद्धितादात्म्याध्यासवशात्तु जीवस्य बुद्धिपरिच्छिन्नत्वाणुत्वसंसारित्वानि भवन्ति, नतु स्वत इति सर्वं सुस्थम्।

इति जीवाणुत्ववादखण्डनं नाम सप्तदशप्रकरणम्।

## नानाजीववादनिरासः।

अथ नानाजीववादी प्रत्यवतिष्ठते—विभवोपि जीवा नाना; विभिन्नव्यवहारचैत्रमैत्रादिदर्शनादिति, नैतच्छ्लाघ्यम्—एकचैतन्योपाधिभूतबुद्धिनानात्वादेव चैत्रमैत्रादिगोचरविभिन्नव्यवहारोपपत्तेः। चैतन्ये बुद्धिपरिच्छेदस्यैवाताात्त्विकत्वेन कथं पुनस्तत्प्रयुक्तं नानात्वम्। नचैवमेकमुक्तौ सर्वमुक्तिप्रसङ्ग इति वाच्यं, एकस्य मुक्तिरित्यंशस्यैवास्माकमनिष्टत्वात्, न हि वयमेको मुच्यत इति ब्रूमः, मुक्तेर्बन्धपूर्वकत्वाद्बन्धस्य च चैतन्ये सूर्ये तिमिरस्यैवासम्भवात्, अद्वितीयत्वान्नित्यमुक्तमसङ्गं हि ब्रह्म, किंतु यो यद्बुद्ध्यवच्छिन्न एवात्मन्यसङ्गचिद्रूपे बन्धस्यासम्भवं गुरुशास्त्राभ्यां प्रत्येति, स तद्बुद्ध्यवच्छेदशून्यो भवतीति ब्रूमः।

ननु महदेतदनिष्टं, बुद्ध्यवच्छिन्नानामणूनामेव बहूनां जीवानां लाभादिति चेन्मैवंवादीः---एकस्मिन्नेवात्मनि बहवो बुद्ध्युपाधयोऽध्यस्तास्सन्ति, तत्र यदुपाधिदेशे विद्योदयः तदुपाधेर्नाशः; आकाशोपाधीनां घटनां मध्ये यस्य घटस्य मुसलाघातस्तस्यैव नाश इतिवदिति विवक्षितत्वात्। यद्वा आत्मबुद्धितादात्म्याध्यासवशाद्बुद्धीनामानन्त्याच्च नानाजीवभ्रान्तिस्तेषां बन्धमुक्त्यादिभ्रान्तयश्च भवन्तीति न कश्चिद्दोषः--

'न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थ'तेति कैवल्यश्रुतेः । तस्मान्नित्यमुक्तो विभुरेक एव जीवः । बहुविभुजीवाङ्गीकारे जीवस्य जीवान्तरव्याप्त्यभावेन व्यापकत्वभङ्गप्रसङ्गात् ।

इति नानाजीववादनिरासो नाम अष्टादशप्रकरणम् ।

---

## दिगम्बरमतखण्डनम् ।



अथ दिगम्बरः प्रत्यवतिष्ठते—तत्तच्छरीरानुगुणमध्यमपरिमाणा जीवाः प्रतिशरीरं भिन्ना बहव एव; अणुत्वे शरीरसर्वान्तरालव्याप्त्यभावप्रसङ्गात्, विभुत्वे शरीराद्बहिरपि ज्ञानोपलब्धिप्रसङ्गाच्चेति, नैतद्ग्राह्यम्—सुकृतदुष्कृतवशेन जीवानां हस्तिमशकादिशरीरपरिग्रहस्य न्याय्यत्वात् हस्तिपरिमाणजीवस्य दुष्कृतवशान्मशकपरिमाणत्वप्राप्तिर्न कथमपि स्यादिति कथं तस्य मशकशरीरपरिग्रहः । तथा मशकपरिमाणजीवस्य कथं हस्तिशरीरपरिग्रहः । न च मध्यमपरिमाणत्वेन जीवस्य सावयवत्वात् सुकृतदुष्कृतवशादवयवविकाससंकोचाभ्यां जीवस्य परिमाणविनिमयस्स्यादिति वाच्यं, सावयवत्वे जीवस्य घटादिवदनित्यत्वप्रसङ्गात्, हस्तिशरीराज्जीवस्योत्क्रममाणस्य हस्तिपरिमाणत्वेन समीपस्थैस्सुग्रहत्वप्रसङ्गात्, हस्तिपरिमाणस्य जीवस्य हस्तिनासावक्त्रादिरन्ध्रान्यतमान्निष्क्रमणस्याप्यसम्भवात्, देहस्येव जीवस्याप्यवयवापचयोपचयप्रयुक्तह्रासवृद्ध्यभ्युपगमे सविकारत्वप्रसङ्गात्, स्वस्य स्वविकारसाक्षित्वायोगेन साक्ष्यन्तराभ्युपगमे जीवस्य दृश्यत्वेन जडत्वप्रसङ्गाच्च ।

अथ यश्चास्मासु पातितो दोषः विभुत्वे शरीराद्बहिरपि ज्ञानोपलब्धिप्रसङ्ग इति न तद्युक्तम्—यत्र बुद्धिस्तत्र ज्ञानोपलब्धिर्नान्यत्रेति

कृत्वा शरीराद्बहिर्बुद्ध्यभावेन न ज्ञानोपलब्धिप्रसङ्ग इति। महतोपि सूर्यस्य दर्पणह्रदादिदेशविशेष एव प्रतिफलनं, न तु भूम्यादावितिवत्। ज्ञानैकाकारस्य परिपूर्णस्य मृत्पाषाणतरुगुल्मादिसर्वजगद्व्यापकस्यैकस्य जीवस्य प्रतिफलनं बुद्धिरेव गृह्णाति, न त्वन्यत्- बुद्धेस्स्वच्छत्वादिति कृत्वा बुद्धिदेशे एव ज्ञानोपलब्धिरिति।

नन्वेवं सर्वत्र चेतनस्य जीवस्य सत्त्वे सर्वाणि सचेतनान्येव स्युरिति कृत्वा कथं चेतनाचेतनविभाग इति चेदुच्यते—'चेतनाचेतनभिदा कूटस्थात्मकृता न हि; किंतु बुद्धिकृताभासकृतैवेत्यवगम्यता'मिति विद्यारण्यवचनाद्यत्र सच्चित्प्रतिफलना बुद्धिरस्ति तच्चेतनं मनुष्यादि, यत्र नास्ति तदचेतनं मृदादि इति विभागोपपत्तेः। तस्मादेको विभुरेव जीवः, न मध्यमपरिमाणः, नाप्यनेक इति।

इति दिगम्बरमतखण्डनंनाम एकोनविंशतिप्रकरणम्।

---

## शिववादनिरासः।

अथ शैवं प्रत्यवतिष्ठते—शिव एव विभुः; ब्रह्मादयस्सर्वे जीवा अल्पा एव; भूम्याकाशावभिव्याप्य स्थितस्य शिवस्य पादौ शिरश्च द्रष्टुं ब्रह्मविष्णू न शक्ताविति पुराणेषु दर्शनात्, तस्यैवाष्टमूर्तित्वात्, भूम्यम्बुतेजोवायुनभस्सूर्यचन्द्रयजमानात्मक मूर्त्यष्टकातिरिक्त पदार्थाभावा दिति, नैतत्सम्यक्—भवदभिमतश्शिवः किं देहः? किमिन्द्रियाणि? किं मनः? किं बुद्धिः? किमहङ्कारः? किमात्मा? किमन्यः? नाद्यः- दृश्यत्वेन तस्य घटादिवदनित्यत्वात्, जडत्वेनानीश्वरत्वाच्च, नहि जडो घटस्स्वातन्त्र्येण चेष्टते। तस्य च शिवदेहस्य ब्रह्मभूमध्या-

दुदयस्य भागवतादिषु प्रसिद्धत्वेन जन्यस्य तस्य जगज्जनकेश्वरत्वायोगात् । नापीन्द्रियाणि शिवः-- तेषां च सविकारत्वादृदृश्यत्वान्मनःपारतन्त्र्याच्च । नापि मनः शिवः- तस्यापि दृश्यत्वादिदोषग्रस्तत्वेन निर्दोषेश्वरत्वासम्भवात् । नापि बुद्धिः शिवः- सुषुप्त्यादौ तस्या नश्वरत्वेन शाश्वतेश्वरत्वायोगाज्जडत्वाच्च । नाप्यहङ्कारः शिवः- तस्याप्युक्तदोषवत्त्वात् । नाप्यन्यः- तस्याभावात् । अतः परिशेषादात्मैव । स चात्मा अस्मदुक्तजीवादनन्य एव । एवं शिवस्येव ब्रह्मविष्णुगणपतिकुमारलक्ष्मीपार्वतीसरस्वत्यादिसर्वदेवताशरीरेष्वपि तत्तद्बुद्ध्यवच्छिन्न आत्मैव तत्तद्ब्रह्मादिशब्दवाच्य इति कृत्वा एकस्यैवात्मनः ब्रह्मविष्ण्वादिशरीरपरिग्रहः, तत्प्रयुक्तब्रह्मविष्ण्वादिनामभाक्त्वं च । अतो नास्त्यन्य आत्मनो विभुश्शिवः । किं त्वात्मैव विभुश्शिवः ।

नन्वेवं ब्रह्मादिमूर्तित्रये सूर्यचन्द्रेन्द्रादिदेवतासु दक्षकश्यपादिप्रजापतिषु नारदादिमहर्षिषु क्रिमिकीटपक्षिपशुमत्स्यमर्त्यादिषु सर्वेषु देहेषु आत्मन एकत्वे कथं जीवेश्वरोपास्योपासकादिभेदव्यवहार इति चेदुच्यते—आत्मन एकत्वेपि शरीरेन्द्रियप्राणमनोबुद्धीनामनेकत्वान्न्यूनाधिकशक्तिमत्वाच्च; दर्शितभेदव्यवहारसिद्धिः तत्तादात्म्याध्यासवशादिति । तथाहि, ब्रह्मणश्चतुर्मुखस्य शरीरं तावज्जगत्परिमितं द्विपरार्धावसायि प्रजापत्यादिसृष्टिकारणमिन्द्रियाणि च दूरदर्शीनि सर्वज्ञत्वादिगुणविशिष्टमन्तःकरणं; एतदुपाध्यवच्छिन्न आत्मा व्यवह्रियते ईश्वर इति । तथा विष्ण्वाद्युपाध्यवच्छिन्नोपि । मनुष्यादिदेहास्तु स्वल्पायुःपरिमाणाः; तदिन्द्रियाणि च सन्निहितवस्तुमात्रदर्शीनि; तदन्तःकरणानि किञ्चिज्ज्ञत्वादिगुणविशिष्टानीति कृत्वा एतदुपाध्यवच्छिन्न आत्मा जीव

इति व्यवह्रियते, तदेवमेकस्याप्यात्मन उपाधितारतम्याज्जीवेश्वरादिभेदव्यवहारस्सङ्गच्छत इति । नचैवं यथाऽस्मदाद्यन्तःकरणावच्छिन्नचैतन्यरूपा ईश्वरा अपि बहव एवेति कृत्वा कथं मायावच्छिन्नचैतन्यमीश्वर एक एव तदुपाधिमायाया एकत्वात् । अन्तःकरणावच्छिन्नचैतन्यं जीवा नाना तदुपाध्यन्तःकरणानामनेकत्वादिति वेदान्तपरिभाषादिवचनसङ्गतिरिति वाच्यं, जीवानेकत्वस्यैवास्माभिरनभ्युपगतत्वात् । परिभाषाकारस्तु औपाधिकं जीवानेकत्वमुक्तवानिति न कोपि विरोधः ।

**ननु** तर्हि ब्रह्मविष्ण्वादिबुद्धीनामनेकत्वात्तदवच्छिन्ना ईश्वरा अपि नानैव भवितव्या इति चेन्मैवम्——ईश्वरोपाधिरेकैव माया स्वनिष्ठसत्त्वादिगुणभेदेन ब्रह्मादिबुद्धित्वेन व्यपदिश्यत इति सिद्धान्तात् । सत्त्वगुणकमायावच्छिन्नचैतन्यं विष्णुः, रजोगुणकमायावच्छिन्नं ब्रह्मा, तमोगुणकमायावच्छिन्नं रुद्र इत्याद्यवान्तरभेदे सत्यपि मायावच्छिन्नचैतन्यस्वरूपेण भेदाभावसत्त्वात् । वस्तुतस्तु औपाधिकं जीवनानात्वमिवेश्वरनानात्वमप्युचितमेव, पुराणादिषु ब्रह्मविष्ण्वादीनामपि परस्परं जन्यजनकभावपूज्यपूजकभावादिदर्शनात् । तस्य औपाधिकभेदस्याप्रयोजकत्वादेक एवेश्वर एकएव जीवः । अयं च जीवत्वेश्वरत्वभेद औपाधिक एवेति एक एवात्मा चैतन्यरूपः । तस्माच्छिवविष्ण्वादिशब्दवाच्य आत्मा एको विभुश्चेति सुस्थम् । किंच आत्मन एव पवित्रत्वेन मङ्गलत्वाच्छिवत्वं, व्यापकत्वेन विष्णुत्वं, बृहत्त्वेन ब्रह्मत्वं च सङ्गच्छते । नतु देहेन्द्रियादीनां- तेषामपवित्रत्वात्क्वचिद्देशे स्थितत्वेन व्याप्यत्वादबृहत्त्वाच्च; तस्मादात्मैव शिवो विष्णुर्ब्रह्मा च ।

इति शिववादनिरासो नाम विंशतिप्रकरणम् ।

## वैष्णववादनिरासः ।



अथ वैष्णवं प्रत्यवतिष्ठते—लक्ष्मीश्रीवत्सचतुर्भुजशङ्खचक्रादिमद्देहतादात्म्यवानात्मैव विष्णुरीश्वर एक एव; चतुर्मुखपञ्चमुखषण्मुखादयस्तु तत्पुत्रपौत्रप्रपौत्रादित्वेन जन्यत्वाज्जीवा एव । तत्तद्देहतादात्म्यवन्तो देहिन एव जीवास्ते च नाना । अमी हि विष्णुं सालग्रामादिष्वर्चयित्वा तदसाधारणचिह्नशङ्खचक्रादिभिश्शरीरं तापयित्वा सालोक्यसारूप्यसामीप्यात्मकं मुक्तित्रयं भजन्ते, नतु सायुज्यं अन्यस्य वस्तुनोऽन्यवस्तुत्वप्राप्त्ययोगात् । 'प्रणवो धनुश्शरो ह्यात्मा ब्रह्म तल्लक्ष्य'मिति श्रुत्या शरलक्ष्ययोरिवात्मब्रह्मणोर्भेदेन भाव्यत्वात् । अस्माच्च वासुदेवाद्विष्णोस्सङ्कर्षणस्ततः प्रद्युम्नस्ततोऽनिरुद्धश्च जात इमांश्च चतुरो देवान् चतुर्व्यूहरूपेण भजन्ते प्राज्ञाः; एतद्विष्णुनामसंकीर्तनादेव मरणकालिकाज्जीवानां मुक्तिः-- अजामिलस्य तथा दर्शनादिति, नैतत्सम्मतम्—लोके हि गुणगुणिनोस्तादात्म्यं दृश्यते शुक्लो घट इति, न तु गुणिनोः- घटः पट इति प्रतीत्यदर्शनात् । भवन्मतरीत्या तु आत्मा गुणी देहो गुणीति तु सम्प्रतिपन्नं, कथं गुणिनोर्देहात्मनोस्तादात्म्यं भवितुमर्हति । न हि देह आत्मगुणः, नाप्यात्मा देहगुणः । न चाहं मनुष्य इत्यादिप्रतीत्या तादात्म्यसिद्धिरिति वाच्यं, तत्प्रतीतेर्भ्रममात्रत्वात्, तत्तादात्म्यस्य चाध्यासरूपत्वात् । न चात्मनो देहित्वव्यवहारादस्ति देहात्मनोस्सम्बन्ध इति वाच्यं, आध्यासिकसम्बन्धस्यास्माभि-

रभ्युपेतत्वात्तेनैव देहिव्यवहारसिद्धेः । 'देहदेहिविभागोयमविवेकिकृतः पु'रेति भागवतात् देहदेहिव्यवहारो भ्रान्तिसिद्ध एव । भ्रान्तिश्चात्र देहे भ्रान्ततद्धर्माध्यासः, आत्मनि च देहतद्धर्माध्यासश्च । तेनात्मनो देहीति व्यवहारः । एवं देहदेहितादात्म्यस्य भ्रान्तिसिद्धत्वेन लक्ष्मी-श्रीवत्सादिमद्देहतादात्म्याध्यासवानात्मा ईश्वर इत्युक्तिरप्रमैव- करचर-णादिमन्मनुष्यदेहतादात्म्याध्यासवानात्मा जीव इत्युक्तिवत् । प्रमा तु निर्धर्मकपरमानन्दबोधरूप आत्मा ईश्वर इत्युक्तिरेव-- निर्धर्मकपर-मानन्दबोधरूप आत्मा जीव इत्युक्तिवत् ।

अथ यदुक्तं चतुर्मुखादयो जन्या इति, तन्मन्दम्——भव-न्मतरीत्या चतुर्मुखादीनां जीवत्वेपि न जन्यत्वं- 'अजो नित्यश्शाश्वतोयं पुराणो न हन्यते हन्यमाने शरीरे' इति गीतावचनाज्जीवस्य जन्मादि-रहितत्वात् , जातो मृत इति व्यवहारस्तु जायमानम्रियमाणदेहतादात्म्या-ध्यासप्रयुक्त एव । तस्माद्विष्णुदेहाद्ब्रह्मदेहो जायतां नाम, न तावता ब्रह्मणो जन्यत्वं नापि विष्णोर्जनकत्वमुभयत्राप्येकस्यैवात्मनो निर्धर्मक-बोधानन्दरूपस्य सत्त्वात् । न हि निर्धर्मके आत्मनि जन्यत्वजनक-त्वादिधर्मसङ्गतिः । एतेन वासुदेवात्सङ्कर्षणो जात इत्यादि प्रत्युक्तम् । शङ्खचक्रादीनां परमात्माऽसाधारणचिह्नत्वं च भ्रान्तिमूलमेव-- सच्चिदा-नन्दानामेव तदसाधारणचिह्नत्वात् , देहतादात्म्याध्यासे सत्येव शङ्ख-चक्रादीनां तच्चिह्नत्वं तदसत्त्वे तु नेति हेतोः । तथा चाज्ञानप्रयुक्तदेह-तादात्म्याध्यासमूलकशङ्खचक्रादिचिह्नधारणान्मुक्तिरिति भवतां वादो

विस्मयकरः- बन्धहेतुत्वादज्ञानतत्कार्याणां, 'नान्यः पन्था विद्यतेऽयना'-येति ज्ञानादन्यस्य मुक्त्यहेतुत्वाच्च । किं च द्विजानां शङ्खचक्रादि-चिह्नधारणमतीव निन्द्यमिति विस्तरेण प्रतिपादितं मयैव सिद्धान्तबिन्दु-व्याख्याने सिद्धान्तसिन्धुग्रन्थे । 'यावतीर्वै देवतास्तास्सर्वा वेदविदि ब्राह्मणे वस'न्तीति श्रुत्या ब्राह्मणतनोर्देवमय्याश्चन्दनादिना पूजनीयायाः कथमग्निना दाहस्सम्मतस्स्यात् ।

अथ सालोक्यादिमुक्तित्रयमस्माकमिष्टमेव- सगुणमुक्तिक्षेत्र-स्यास्मत्सिद्धान्तविषयत्वात् , सायुज्याभाववादस्तु दुष्टः- अज्ञानमूल-कात्मानात्मतादात्म्याध्यासप्रयुक्तजीवेश्वरद्वैतस्य ब्रह्माहमिति ज्ञानेनाज्ञा-नस्य नाशे स्थित्ययोगात् , जीवेश्वरयोर्वस्तुत एकचैतन्यरूपत्वेन द्विवस्तु-त्वाभावात् , 'प्रणवो धनु'रिति श्रुतिगतात्मशब्दार्थस्तु बुद्धिरेव- ब्रह्मरूपे लक्ष्ये मनोरूपश्शरो निवेशयितव्य इति तदर्थात् ।

अथ विष्णुनामसंकीर्तनान्मुक्तिरित्यप्ययुक्तम्— रज्जुज्ञानं विना सर्पभ्रान्तेरिव ब्रह्मात्मज्ञानं विना संसारित्वभ्रान्तेरनिवर्त्य-त्वात् । 'आक्रुश्य पुत्रमघवान्यदजामिलोपि नारायणेति म्रियमाण उपैति मुक्ति'मित्यत्र मुक्तिशब्दस्य स्वर्गार्थप्रवचनान्नाजामिलस्य नामस्मरणान्मुक्तिः; किं च अजामिलोपि नारायणस्मरणाद्विष्णुदूता-न्प्राप्य तत्सङ्गवैभवात्पुनर्ज्ञानं प्राप्य मुक्त इति भागवते दर्शनात् नास्ति ज्ञानं विना मोक्षस्य साक्षात्साधनम् । ग्रामादिषु विष्णोरर्चनं तु मन्दा-धिकारिविषयम् । उत्तमाधिकारिणस्तु- 'मनीषिणोन्तर्हृदि सन्निवेशितं

स्वशक्तिभिर्नवभिश्च त्रिवृद्भिः । वह्निं यथा दारुषु पाञ्चदश्यं मनीषया निष्कर्षन्तीह गूढ'मिति भागवतोक्तविधया स्वशरीरान्तर्हृदय एव व्यापकमात्मानं विदित्वार्चयन्ते, अर्चनं च तस्य न कुसुमादिभिः पूजनमविषयत्वात्किन्तु सोहंभावेन वर्तनमेव- सोहंभावेन पूजयेदिति वचनात् । यद्वात्मानं विदित्वा कृतकृत्यतया प्राप्तप्राप्यतया च तूष्णीं सुखेनासनमेव पूजनम् । तस्मादात्मैव विष्णुः- तदवगतिरेव मुक्तिहेतुरिति सुस्थम् ।

इति वैष्णववादनिरासोनाम एकविंशतिप्रकरणम् ।



## शाक्तेयमतखण्डनम् ।

**अथ शाक्तेयं प्रत्यवतिष्ठते**—शक्तिरेव परमात्मा- ईश्वरस्यापि शक्तिमत्त्वे एव जगत्सृष्ट्यादिकार्यनिर्वहणात् । सा च शक्तिर्लक्ष्मीपार्वतीसरस्वत्यादिबहुनामधारिणी; तस्या एव सकाशाद्ब्रह्माद्युत्पत्तिः; वामाचारेण दक्षिणाचारेण वा यथाशास्त्रं शक्त्युपासनादेव मुक्तिरिति, **नैतद्युक्तम्**—त्वदभिमता शक्तिस्सामर्थ्यापरपर्याया न परमात्मा, किंतु मायैव- मायाया एव परमात्मशक्तित्वात् । इयं हि जडा सदसदनिर्वाच्यत्वेन मिथ्याभूता च । 'निस्तत्वा कार्यगम्यास्य शक्तिर्मायाऽग्निशक्तिव'दिति श्रीविद्यारण्यस्वामिवचनात् । लक्ष्म्यादयस्तु न शक्तिरूपिण्यः, किंतु परमात्मरूपिण्य एव- लक्ष्म्यादिशरीरेषु निर्धर्मकपरमानन्दबोधरूपस्यात्मनस्सत्त्वात । स्त्रीत्वपुंस्त्वादिभेदश्शरीरगत एव, न त्वात्मगत इति कृत्वा न लक्ष्म्यादीनामात्मरूपत्वे विमोहितव्यम् । भक्तास्तु यथामति ब्रह्माणं विष्णुं शिवं लक्ष्मीं पार्वतीं सरस्वतीं वा भजन्तांनाम, ज्ञानिनस्तु सर्व-

त्रापि तत्तदुपहितमात्मानमेव स्वाभिन्नत्वेन भजन्ते। ततश्च वामदक्षिणाचाराभ्यां शक्त्युपासनान्न मुक्तिः, किंतु स्वर्गधनादिकमेव। यत्र लक्ष्म्यादयो विष्ण्वादयोऽस्मदादयश्च सर्वे देहा अध्यस्तास्तस्यात्मन एकस्यैव ज्ञानान्मुक्तिः- स्वस्वरूपसागरतरङ्गप्राया हि ब्रह्मादिपुमवतारा लक्ष्म्यादिस्त्र्यवतारश्च। तस्माल्लक्ष्म्यादीनां परमात्मत्वेपि न शक्तिः परमात्मा।

इति शाक्तेयमतखण्डनं नाम द्वाविंशतिप्रकरणम्।



## सौरमतनिरासः।

अथ सौरः प्रत्यवतिष्ठते—सूर्य एवेश्वरः- तमसि लीनानां सर्वेषां प्राणिनां सूर्यवशादेव व्यवहारलाभात्, 'याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्ष'तीति श्रुत्या सूर्यस्यैव वर्षादिद्वारा जगद्रक्षकत्वात्। प्रलये सूर्यमहसैव जगद्दाहात्। 'असावादित्यो ब्र'ह्मेति श्रुतेः वालखिल्यादीनां सूर्योपास्त्या कृतकृत्यत्वात्, सूर्यस्यैव जगदवभासकत्वात्स्वप्रकाशकत्वाच्च, संवत्सरात्मककालचक्रस्य सर्वप्राण्यायुष्यक्षयहेतोस्सूर्याधीनत्वाच्च, सूर्यतेजसएव गायत्रीरूपस्य सर्वद्विजोपास्यत्वात्, तत्त्यागे प्रत्यवायदर्शनात्, त्रिवेदात्मकस्त्रिमूर्तिरूपस्सूर्य एक एवेश्वरः, अन्ये जीवास्तदुपासनान्मुच्यन्त इति, नैतद्ग्राह्यम्—भवदभिमतस्सूर्यः किं मण्डलरूपः? किं तदन्तर्गतहिरण्यश्मश्रुत्यादिविशिष्टपुरुषरूपः? उत तदन्तर्गत आत्मा? न तावदाद्यः- सूर्यमण्डलस्य भूमण्डलवद्दृश्यत्वेन

जडत्वात्सविकारित्वेनानित्यत्वादनीश्वरत्वमेव न त्वीश्वरत्वम् । अन्यथा तेजोमयसूर्यमण्डलमिव भूवायुगगनमण्डलान्यपीश्वराणि स्युरेव ।

अथ यदुक्तं सूर्यमण्डलस्य जगद्रक्षकत्वं तदस्माकमिष्टमेव- न तावता तस्येश्वरत्वम् । वाय्वादिमण्डलानामपि जगद्रक्षकत्वप्रत्यक्षेणेश्वरत्वप्रसङ्गात् । प्रलये जगद्दाहकत्वं च सूर्यमण्डलस्येवाग्निमेघमण्डलादीनामप्यस्त्येव । तस्मान्न सूर्यमण्डलमीश्वरः । नापि तदन्तर्गतःपुरुषः-- तस्य अस्मदादिदेहवज्जडत्वादिदुष्टत्वात् । अतः परिशेषादान्तर आत्मैव सूर्यः, स एव गायत्र्यर्थ उपास्यो मुक्तिदश्चेति कृत्वा नास्त्यात्मनोन्यस्सूर्यः । तं च गायत्रीरूपमात्मानं सूर्यं धीमह्यहं स एवेति तद्वै तद्ब्रह्मसम्मितामितिवचनात्सोहंभावेनैव ध्यायेत्- सर्वत्रात्मन एकत्वात् । एवंविधार्चनया तु मुक्तिरेव-- ब्रह्मात्माभेदज्ञानपूर्वकत्वान्मुक्तेः ।

इति सौरमतनिरासोनाम त्रयोविंशतिप्रकरणम् ।

---

## जगद्ब्रह्मवादनिरासः ।

अथ जगदीश्वरवादी प्रत्यवतिष्ठते—'सर्वं खल्विदं ब्र'ह्मेति श्रुतेः, तन्तुपटादिषु कार्यस्य कारणानन्यत्वदर्शनाच्च जगदेवेश्वरः-- 'तत्सृष्ट्वा तदेवानुप्राविशत्, सच्च त्यच्चाभव'दिति श्रुतेर्ब्रह्मैव जगद्रूपेण परिणतं मृद्घटरूपेणेव । परिणामानन्तरं तु नास्ति ब्रह्म, किंतु जगदेव; इदमेव जगद्विराडित्युच्यते; अस्यैवार्चनया मुक्तिरिति, नैतत्सङ्गतम्--- निरवयवस्य निर्विकारस्य ब्रह्मणः जगद्रूपपरिणामासम्भवात् । श्रूयमाणस्य सच्च त्यच्चाभवदिति परिणामस्य मायिकत्वात्, अथवा रज्जुसर्पवद्विवर्त-

वादाश्रयणात् , (उपादानसमसत्ताककार्यापत्तिः परिणामः, तद्विषमसत्ताककार्यापत्तिर्विवर्त इति विवेकः) ब्रह्मणो जगत्सर्जनं जीवरूपेणानुप्रवेशश्चेत्युभयस्य मायिकत्वात्तन्तोः पटभावापत्तिवन्न ब्रह्मणो जगद्भावापत्तिः । 'मायामेघो जगन्नीरं वर्षत्येव यथा तथा । चिदाकाशस्य नोहानिर्न वा लाभ इति स्थित'मिति वचनादाकाशे मेघो वर्षधारा इव ब्रह्मणो माया भूतभौतिकानि सृजत्येव, तैस्तु न ब्रह्मणः कोपि सम्बन्धः वर्षधाराभिराकाशस्यैव । तस्मात्कालत्रयेप्येकरूपमेव ब्रह्म न कदाचिदपि जगद्रूपम् । अस्माकं जगत्प्रतीतिस्तु माययैवेति न जगतो ब्रह्मत्वम् ।

यदि जगद्ब्रह्म स्यात्तर्हि जगदिदं सच्चिदानन्दं नित्यं स्वप्रकाशं निर्विकारं कालत्रयेप्येकरूपं द्रष्टृ च स्यात् , नैवं भवति, किं तु अनृतजडदुःखात्मकमप्रकाशं सविकारकबहुरूपं दृश्यं च भवति । तस्मान्न तन्तुपटयोरिव ब्रह्मजगतोः कार्यकारणभावः, येन कारणादनन्यं कार्यं भवेत् । प्रकृते तु रज्जुसर्पयोरिव ब्रह्मजगतोः कार्यकारणभावः । तत्र तु रज्जोरन्य एव सर्प इति जगतोऽन्यदेव ब्रह्म कारणादन्यस्यैव कार्यस्योत्पत्तिर्हि विवर्त इत्युच्यते । मायाजगतोस्तु तन्तुपटयोरिव कार्यकारणभावोस्ति- मायापरिणामित्वाज्जगतः । तस्मादनित्यस्यानृतजडदुःखात्मकस्य जगतो नेश्वरत्वं, नापि ब्रह्मत्वम् । 'सर्वं खल्विदं ब्र'ह्मेति श्रुतिस्तु बाधसामानाधिकरण्यं ब्रूते- जगद्बाधे ब्रह्मण एव परिशेषात् , जगदभावस्यैव ब्रह्मत्वात् । यद्वा कल्पितस्याधिष्ठानस्वरूपानतिरिक्तत्वाद्ब्रह्मणि कल्पितं जगत् ब्रह्मेत्युच्यते । अथ वा ब्रह्मणो मायोपहितत्वाज्जगतश्च मायामयत्वादुपाध्युपाधिमतोस्तादात्म्याध्यासात्स्थू-

लोहमितिवज्जगद्ब्रह्मेति व्यवहारः। एवं जगद्ब्रह्मवत्त्वज्ञानात्तु मुच्यत एव, नतु केवलघटपटादिजगद्ज्ञानात्।

इति जगद्ब्रह्मवादनिरासो नाम चतुर्विंशतिप्रकरणम्।

## कालब्रह्मवादनिरासः।

अथ कालब्रह्मवादी प्रत्यवतिष्ठते—सर्वदेहिनां ब्रह्मादिकीटान्तानां कालाधीनस्थितिकत्वात्काल एवेश्वर इति, नैतद्युक्तम्—भवदभिमतः कालः किं नित्यः? किं जन्यः? नित्यः कालस्तु परमात्मैव—कलयति सर्वं साक्षात्करोतीति काल इति व्युत्पत्तेः। यद्वा कलयति चोदयति मायया सर्वमिति कालशब्दनिरुक्तेः कालोऽन्तर्याम्येव।

अथ यस्तु जन्यः कालस्तृटिनिमिषघटिकादिरूपस्स नेश्वरः—तस्यानित्यत्वात्, अयं जन्यः कालश्शक्तिविशेष एवाविद्यायाः, नत्वतिरिक्तः पदार्थः। ब्रह्मादिकीटान्तप्राणिनस्तु जन्यकालस्यापि वशा एव—अविद्याकृतानात्मतादात्म्याध्यासवत्त्वात्। आयुःक्षपणेन तेषां भयहेतुश्चायं जन्योपि कालः। नैतावन्मात्रेण जन्यकालस्येश्वरत्वं- सविकारित्वादनित्यत्वाज्जडत्वात्परमार्थतस्सुषुप्त्यादावसत्त्वेन मिथ्याभूतत्वाच्च तस्येति। तस्माज्जन्यकालादन्य एवात्मा काल ईश्वरः।

इति कालब्रह्मवादनिरासोनाम पञ्चविंशतिप्रकरणम्।

## स्फोटब्रह्मवादनिरासः।

अथ स्फोटब्रह्मवादी वैयाकरणः प्रत्यवतिष्ठते—रकाराकारमकाराकारादिसंयोगव्यङ्ग्यः राम इत्यादिस्फोटश्शब्दो ब्रह्म; साधुशब्दो-

च्चारणान्मुक्तिः; तद्ज्ञानार्थं व्याकरणशास्त्रमभ्यसनीयमिति, नैतत्समीचीनम्—अनित्यस्य शब्दस्य नित्यब्रह्मत्वायोगात् । तथाहि, शब्दो द्विविधः- वर्णात्मको ध्वन्यात्मकश्चेति । वर्णात्मको रामकृष्णादिः; ध्वन्यात्मको भेरीमृदङ्गादिजन्यो भाङ्कारादिः । तत्र वर्णात्मकश्शब्द एव व्याकरणशास्त्रविषयः; ध्वन्यात्मकस्तु सङ्गीतशास्त्रविषयः; वर्णाश्चाकारेकारादय उच्चारणानुविनाशिन इत्यस्माकमनुभवसिद्धमेव; सोयं गाकार इति प्रत्यभिज्ञा तु सेयं दीपज्वालेतिवित् जात्यालम्बनैव । वर्णानामनित्यत्वे वर्णात्मकशब्दानित्यत्वं किं पुनर्वक्तव्यमिति ।

ननु न वयं वर्णात्मकं शब्दं स्फोटब्रह्म ब्रूमः, किं तु तदतिरिक्तमेव, वर्णव्यङ्ग्यं स्फोटं ब्रह्म ब्रूम इति, चेन्नैवम्—वर्णातिरिक्तवर्णव्यङ्ग्यस्फोटाभावात् । रकाराकारमकाराकारसंयोगात्मकएव हि रामशब्दः । नचैतेषां शब्दानामनित्यत्वे विवदितव्यं, सुषुप्त्यादिषु शब्दलयानुभवात् । नचैवं कथं वेदस्य नित्यत्वव्यवहार इति वाच्यं, यावत्प्रलयं नित्यत्वमित्यभ्युपगमात् । तस्मान्नास्ति जन्यस्यानित्यस्य जडस्य शब्दस्याभ्यासान्मुक्तिः । नापि तस्मादन्यस्स्फोट इति कश्चन पदार्थ इति व्याकरणशास्त्रं मुमुक्षुणा न ग्राह्यं, प्रत्युत ज्ञानाभ्यासविरोधित्वाद्दूरतस्त्याज्यमेव । व्यावहारिकैस्तु शब्दसाधुत्वज्ञानार्थमभ्यसनीयमेव, वेदाध्ययनवद्वेदाङ्गव्याकरणाद्यध्ययनात्तु सुकृतविशेषोऽस्त्येव, नतु मोक्षः ।

इति स्फोटब्रह्मवादनिरासोनाम षड्विंशतिप्रकरणम् ।

## नादब्रह्मवादनिरासः ।



अथ नादब्रह्मवादी आह—ओमित्येकाक्षरं ब्रह्मेति श्रुतेः, प्रणवात्मको नाद एव ब्रह्म; अयं च नादः कर्णपिधानपूर्वकं प्रणवमभ्यस्यता योगिना ज्ञायते; तस्माच्छतानन्दमनुभवतीति नाद एवानन्दमयः; नादानुभवादेव मुक्तिरिति, नैतत्सङ्गतम्—अपिहिते कर्णे बाह्यनादश्श्रूयते; पिहिते तु प्राणवाय्वादिनादश्श्रूयते । स चान्तरो नाद आत्माधिष्ठितप्राणवायुजन्य एव— वायोर्नादोत्पत्तिस्सर्वानुभवसिद्धैव । तस्मान्नास्ति जन्यस्य नादस्य ब्रह्मत्वम् । ओमित्येकाक्षरं ब्रह्मेति श्रुतिस्तु वाच्यवाचकयोर्ब्रह्मप्रणवयोरभेदारोपप्रयुक्ता 'ओंकारवाच्यस्त्वं राम वाचामविषयः पुमान् । वाच्यवाचकभेदेन भवानेव जगन्मय' इति स्मरणात् । परमात्मन्योंकारवाच्ये कथमोंकारनादरूपत्वम् । अकारोकारमकाराणां ब्रह्मविष्णुशिववाचकानां संयोगादोंकारशब्दनिष्पत्तिरिति कृत्वा ओंकारस्य त्रिमूर्त्यात्मकब्रह्मवाचकत्वमिति बोध्यम् । न च वाचामविषये ब्रह्मणि कथमोंकारवाच्यत्वमिति वाच्यं, ब्रह्मविष्णुशिवात्मके वाचां विषये एव ईश्वरात्मके ब्रह्मणि ओंकारप्रवृत्त्यभ्युपगमात् । ब्रह्मण ईश्वरात्मकत्वं नाम मायाशबलितत्वमिति बोध्यम् । शुद्धं ब्रह्म तु ओंकारलक्ष्यमेव । एतेन वस्तुतो वाचामविषयोपि व्यवहारत ओंकारवाच्य इति सिद्धम् ।

यद्वा चतुष्टयी हि शब्दानां प्रवृत्तिः- जातिर्गुणः क्रिया सञ्ज्ञा च- गौश्शुक्लः पाचको डित्थ इति । जात्याद्यभावाद्ब्रह्मणि न चतुर्विधानामपि शब्दानां प्रवृत्तिरिति कृत्वा वाचामविषय इत्युक्तम् ।

ओंकारस्तु लक्षणया ब्रह्म प्रतिपादयतीति ओंकारवाच्य इत्युक्तम् । अथवा ओंकारस्य ब्रह्मणि योगरूढत्वादोंकारवाच्यत्वमस्ति ब्रह्मणः, परमार्थतस्तु ओंकारस्यैवाभावात्कुतस्तद्वाच्यत्वं ब्रह्मण इति नावाङ्मानसगोचरश्रुतिविरोधः । तदेवमोंकारवाच्यस्य ब्रह्मण ओंकाररूपत्वासम्भवादोंकारात्मको नादश्शब्दो वा न ब्रह्म ।

इति नादब्रह्मनिरासोनाम सप्तविंशतिप्रकरणम् ।

---

## जलब्रह्मवादनिरासः ।

अथ जलब्रह्मवादी आह—'आपो वा इदं सर्वं, विश्वा भूतान्यापः, प्राणा वा आपः, पशव आपोन्नमापस्सम्राडापो विराडापश्छन्दांस्यापो यजूंष्यापस्सत्यमापस्सर्वा देवता आपो भूर्भुवस्सुवरो'मिति श्रुतेराप एव ब्रह्मेति, मैवम्—अग्नेराप इति श्रुत्या जलस्याग्निजन्यत्वेनानित्यस्य कथं नित्यब्रह्मत्वम् । श्रुतौ तु आप्नोति सर्वमिति व्युत्पत्त्या सर्वव्यापि चैतन्यमेवाप्छब्दो बोधयति । कथमन्यथा प्राणादीनां जलरूपत्वं स्यात् । अथ वा ब्रह्मणि कल्पितानामपां ब्रह्मतादात्म्याध्यासेन ब्रह्मत्वमित्यभिप्रेत्य स्तौति श्रुतिरापो ब्रह्मेति । एवमेव 'प्राणो ब्रह्म कं ब्रह्म खं ब्र'ह्मेत्यादिश्रुतयः प्राणादीनपि ब्रह्मत्वेन स्तुवन्ति ।

इति जलब्रह्मवादनिरासोनाम अष्टाविंशतिप्रकरणम् ।

---

## उपसंहारः ।

किंबहुना, ब्रह्मणोन्यत्सर्वमपि ब्रह्मणि कल्पितमेवेति न ब्रह्म; एक एवात्मा ब्रह्म- तस्याकल्पितत्वात्, सर्वाधिष्ठानत्वाच्च । आकाशे

घटा इवास्मिन्नेवात्मनि सर्वं कल्पितं घटेष्वाकाश इव सर्वेष्वात्मा वर्तते च । अत एव 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थितः' इति श्रुतिः । न लीयते न क्षीयत इति नर आत्मा, तत्र कल्पितत्वे तदीयानि सर्वाणि वस्तूनि नाराणि तान्ययति प्राप्नोति व्याप्य वर्तत इति नारायणस्सर्वव्यापी आत्मैव; सचैक एव; एकमेवाद्वितीयं ब्रह्मेति श्रुतेः । तत्र जीवेश्वरजगद्बुद्धयस्तु भ्रान्तय एवेति सुस्थितमद्वैतं सर्वद्वैतस्याप्रमात्वात् ।

इत्युपसंहारप्रकरणंनाम एकोनत्रिंशतितमम् ।

समाप्तश्चायमद्वैतान्यमतखण्डनग्रन्थो रामकर्तृकस्समर्पितश्च श्रीहयग्रीवचरणयोः ।

प्लवङ्गफाल्गुनबहुलषष्ट्याम् ।

---

